'नानुपहूतेन सोमः पातवै' इति वचनादनुज्ञातस्यैव भक्षणमित्यर्थः । पातवै पातव्यः; कृत्यार्थे तवैप्रत्ययः; 'अनुज्ञात—' इत्यनेनोपपूर्वो ह्वयतिरनुज्ञानार्थ इति सूचितम् । उत्तरविवक्षार्थमेतत्सूत्रम् । अनुज्ञापनं विनानुज्ञानानुपपत्तेरनुज्ञापनमर्थादाक्षिप्तम्; तदुभयमपि 'अनुजानीहि' 'अनुज्ञातोऽसि' इत्यादिशब्दोच्चारणादिलौकिकोपायेन प्राप्तम्; तत्राह—

१२. भक्षस्यानुज्ञापूर्वकत्वमधिकरणम् ।

## तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात् ॥ ४१ ॥

'उपहूतः' इत्येको मन्त्रः; भक्षं कर्तुमनुज्ञातोऽसीत्यर्थः । 'उपह्वयस्व' इत्यन्यो मन्त्रः भक्षणमनुजानीहीत्यर्थः; तत्र 'होतः' इत्यादिसंबुद्ध्यन्तपदमध्याहार्यम्— 'होतरुपह्वयस्व' इत्यादि । 'असावसावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयते' इति कल्पसूत्रम् । अनुज्ञापयेत्— इत्युपलक्षणम्— तत् भक्षणम्, अनुज्ञापयेत् अनुजानीयाच्च; कुतः? लिङ्गात् मन्त्रसामर्थ्यात् । इदमपि सूत्रमुत्तरविवक्षार्थमेव ॥

'उपहूतः' 'उपह्वयस्व' इति मन्त्रद्वयेनानुज्ञानमनुज्ञापनं च कर्तव्यमिति स्थितम् । तत्र किमिदं मन्त्रद्वयमनुज्ञानानुज्ञापनयोरन्यतरत्र प्रयोक्तव्यम्, अन्यतरत्र तु लौकिकोपाय आश्रयणीयः? उतोभयत्रोभयं प्रयोक्तव्यम्? अथ वा यथालिङ्गं विभज्य विनियोगः? इति संशयः । तत्र यथालिङ्गं विभज्य विनियोगे स्वीक्रियमाणे अनुज्ञानस्य 'उपहूतः' इति प्रतिवचनात्मकस्य 'होतरुपह्वयस्व' इत्याद्यनुज्ञापनोत्तरभावित्वात् 'उपह्वयस्व' इति द्वितीयमन्त्रस्य प्रथमकर्तव्येऽनुज्ञापने प्रथमं प्रयोगः; 'उपहूतः' इति प्रथममन्त्रस्य तु तदुत्तरकर्तव्येऽनुज्ञाने पश्चात्प्रयोगः स्यादिति मन्त्रपाठक्रमो बाध्येत; अतो मन्त्रद्वयमिदं यथापाठमेवान्यतरत्र प्रयोक्तव्यम्; तत्र 'उपहूतः' इत्यस्यानुज्ञापने विशेषणप्रतिपादनमुखेन समावेशः; तथा 'उपह्वयस्व' इत्यस्यानुज्ञाने विनियोगबलादैन्द्रीन्यायेन व्यत्ययमाश्रित्य 'अनुजानीयाम्' इत्यर्थाश्रयणेन समावेशः; एवं च लिङ्गमनुगृहीतम्, पाठश्च; तथा च मन्त्रद्वयमेकत्र प्रयोक्तव्यम्; अन्यत्र तु लौकिकोपाय आश्रयणीयः । अथ वा प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वादुभयमुभयत्रेति प्राप्ते, सिद्धान्तयति—

## तत्रार्थात्प्रतिवचनम् ॥ ४२ ॥

तत्र तयोर्मन्त्रयोर्मध्ये 'उपहूतः' इति मन्त्रेण प्रतिवचनमनुज्ञानं कर्तव्यम्; अर्थात्सामर्थ्यानुसारात्; एवं च परिशेषात् 'उपह्वयस्व' इति मन्त्रेणानुज्ञापनं कर्तव्यमित्युक्तप्रायम्, 'उपहूतः' इत्यस्य विशेषणमुखेनानुज्ञापनपरत्वे अजहत्स्वार्था वृत्तिराश्रिता स्यात्; 'उपह्वयस्व' इत्यस्य तु विशेष्यपरित्यागेनानुज्ञापरत्वे स्वार्थैकदेशत्यागाज्जहत्स्वार्था वृत्तिराश्रिता स्यात्; अतो यथालिङ्गं

विभज्य विनियोगः। यत्तु पाठक्रमो बाध्यत इति; तत्राप्येतदेव सूत्रमुत्तरम्; अर्थक्रमात्पाठक्रमं बाधित्वा यथालिङ्गमेव विनियोग इत्यर्थः। वृत्तमधिकरणम् ॥

तदेतत् 'होतरुपह्वयस्व' इत्यनुज्ञापनं भक्षयित्रा कर्तव्यमित्यविवादम्; तत्र किं यं कंचिदनुज्ञापयेत्, 'उपहूतः' इत्यनुज्ञानं च यः कश्चित्कुर्यात्— इत्यनियमः? उत एकस्मिन्पात्रे यावन्तः प्रतिभक्षयन्ति तावन्तो ह्यनुजानीयुः? एको द्वौ बहवो वा? इति संशये— मन्त्रलिङ्गकल्पितानुज्ञापनविधेरेकमेवानुज्ञाप्यमादाय चरितार्थत्वात्, दृष्टार्थत्वाच्चानुज्ञापमानुज्ञानयोः, यं कंचिदेकमनुज्ञापयेत् स एवैकोऽनुजानीयाच्चेति प्राप्ते, सिद्धान्तयति—

## तदेकपात्राणां समवायात् ॥ ४३ ॥

तत् अनुज्ञापनमनुज्ञानं च, एकपात्राणाम्— एकं भक्षणपात्रं येषां ते एकपात्राः— एकस्मिन्पात्रे भक्षयितारः— तत्कर्तृकं भवति; कुतः? समवायात् एकपात्रभक्षयितृकर्तृकयो-

१३. एकपात्राणामनुज्ञापनाधिकरणम्। रेवानुज्ञापनानुज्ञानयोः प्रयोजनेन संयोगात्। तथा हि— एकपात्रस्थः सोमः 'समं स्यादश्रुतत्वात्' इति न्यायेन समशो भक्षणीयः; न्यूनाधिकभावस्तु तत्रावर्जनीयः; तन्मर्षणायानुज्ञापनं क्रियते; तस्मादेकपात्रे बहूनां भक्षणे सर्वे भक्षयितारोऽनुज्ञाप्याः। एवं च एकस्मिन्नेव समये नानापात्रेषु बहुभिर्भक्ष्यमाणेषु तथा एकस्मिन्पात्रे एकेनैव भक्ष्यमाणेऽपि नानुज्ञापनमनुज्ञानं चेति स्थितम्। वृत्तमधिकरणम् ॥

ज्योतिष्टोमे सन्ति ऋतुग्रहाः; तत्र होतृवेदसमाख्याते ऋग्वेदे काचिद्याज्या पठिता— 'अग्निं गृहपतिम्' इत्यादिः; सा तावत्समाख्यया होतारं प्राप्ता; 'अग्निं गृहपतिमिति यजमानस्य याज्या' इति वचनाद्धोतुरपनीता, यजमानं प्राप्ता; 'सोऽभिप्रेष्यति होतरेतद्यज' इति यजमानसंप्रैषात्पुनर्होतारं प्राप्ता, 'स्वयं वा निषद्य यजति' इति वचनात्पुनर्होतुरपनीता पक्षे यजमानेऽवतिष्ठते; निषद्य होतुर्धिष्ण्यस्य पश्चादुपविश्येत्यर्थः; तत्र यदा यजमानप्रेषितो होता याज्यां वदति तदा होतुरेव वषट्कर्तृत्वाद्भक्ष इत्यविवादम्; यदा तु यजमानो याज्यां वदति तदा होतुर्भक्षोऽस्ति नास्तीति संशये, पूर्वपक्षयति—

## याज्यापनये नापनीतो भक्षः प्रवरवत् ॥ ४४ ॥

होतुः सकाशाद्याज्याया अपनये सत्यपि भक्षो नापनीतः स्यात्, भक्षनिमित्तस्य वषट्कारस्य होतुः सकाशादपनयाभावात्; न हि वषट्कारो याज्यान्तर्भूतः, 'याज्याया अधि वषट्करोति' इति वचनात्; प्रवरवत्— यथा होतुः सकाशाद्याज्याया अपनयेऽपि 'इन्द्रं होत्रात्सजूर्दिव आ पृथिव्या असौ मानुषः' इति होतारं वृणीते

१४. स्वयं यष्टुः भक्षास्तित्वाधिकरणम्।

इति ऋतुयाज्यार्थवरणलक्षणः प्रवरो नापनीतः, तद्वद्वषट्कारस्तन्निमित्तभक्षश्च नापनीतः। सूत्रे भक्षग्रहणं वषट्कारस्याप्युपलक्षणम् ॥

अथ सिद्धान्तयति—

## यष्टुर्वा कारणागमात् ॥ ४५ ॥

यष्टुः यजमानस्य याज्याप्रयोक्तुरेव भक्षो भवति; कुतः? कारणागमात् 'याज्याया अधि वषट्करोति' इति वचनेन याज्याप्रयोक्तुरेव वषट्कारस्य आगमात् प्राप्तेः; न च यजमानप्रयुक्ताया याज्याया उपरि होता वषट्करोति— इति युक्तम्, 'संततमृचा वषट्कृत्यम्' इति विरोधात्; न हि पुरुषभेदे याज्यावषट्कारयोः सांतत्यं संभवति; अविच्छिन्नप्रयत्नत्वमेव हि सांतत्यम्; याज्यामात्रं च ब्रुवन्यजमान उपरतप्रयत्नः स्यात्। किं च 'स्वयं यजति' इति यजमानस्य प्रदानार्थकवषट्कारार्थकयाज्याप्रयोक्तृत्वं श्रुतम्, केवलयाज्याप्रयोक्तृत्वे प्रदानार्थकयजेस्तत्र जहत्स्वार्थलक्षणाप्रसङ्गात्। तस्माद्याज्याप्रयोक्तुर्यजमानस्यैव वषट्कारो भक्षश्च ॥

अथ प्रवरवदित्यत्राह—

## प्रवृत्तत्वात्प्रवरस्यानपायः ॥ ४६ ॥

'इन्द्रं होतात्' इति प्रवरो न केवलमेतद्याज्यार्थः; किं तु तन्त्रेण सकलसौमिकहोत्रीययाज्यार्थतया प्रवृत्तः; अतो याज्यायामस्यां होतुः सकाशादपनीतायां यजमानं प्राप्तायां तदर्थयजमानवरणावश्यंभावेऽपि तदितरसकलयाज्यार्थं होतुरपि वरणस्यावश्यंभावान्न तस्य होतुः सकाशादपनय इति वैषम्यमित्यर्थः। वृत्तमधिकरणम् ॥

ज्योतिष्टोमे श्रूयते— 'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत्, न सोमम्' इति। न्यग्रोधस्तिभिनीः न्यग्रोधफलस्तबकान्, संपिष्य सूक्ष्मं पिष्ट्वा, दधनि उन्मृज्य संकलय्य। स्पष्टमन्यत्। सोऽयं फलचमसः केवलं सोमभक्षप्रत्याम्नायभक्षार्थो यजमानस्य, यागार्थस्तु यजमानसोमचमसः अस्त्येव; उत यजमानचमसस्यैवायं फलचमसः प्रत्याम्नायः, नास्त्येवान्यो यजमानचमसः, तत्स्थाने फलचमसेन यष्टव्यम्— इति संशये, पूर्वपक्षयति—

## फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४७ ॥

दधिसंसृष्टन्यग्रोधफलपिष्टद्रवपूर्णश्चमसः फलचमसः, स च यजमानस्य राजन्यत्वे वैश्यत्वे च निमित्ते विहितः; भक्षविकारः— भक्षं सोमभक्षणं विकरोति बाधते— इति भक्षविकारः;

१५. फलचमसस्येज्याविकारताधिकारताधिकरणम् । सोमभक्षणमात्रे विषये सोमचमसप्रत्याम्नायः, न त्विज्यायामिति यावत्; कुतः? श्रुतिसंयोगात्— 'विभक्षयिषेत्' 'भक्षं प्रयच्छेत्' इति सोमभक्षणकार्यकारित्वश्रवणेन फलचमसस्य संयोगात् यजतेश्च तत्राश्रवणात्; तस्माद्यजमानस्य केवलं सोमभक्षप्रत्याम्नायभक्षणार्थः फलचमसः; इज्यार्थस्तु याजमानः सोमचमसोऽस्त्येव; तस्य तु वषट्कर्तृभक्षणमेव प्रतिपत्तिः ॥

अथ सिद्धान्तयति—

## इज्याविकारो वा संस्कारस्य तदर्थत्वात् ॥ ४८ ॥

वाशब्दोऽवधारणे । इज्याविषय एवायं फलचमसो यजमानसोमचमसप्रत्याम्नायः; न तु भक्षणमात्रे; कुतः? संस्कारस्य तदर्थत्वात्— भक्षणरूपसंस्कारस्य प्रतिपत्तिविधया यागार्थत्वात्, प्रतिपत्तिरूपभक्षणस्य यागाविनाभूतत्वादिति यावत्; एतेन— यजेरश्रवणाद्यागार्थत्वमेव फलचमसस्यासिद्धम्, येन तस्य यागार्थद्रव्यसंस्काररूपभक्षणसंबन्धाद्यागसाधनत्वमुन्नीयेत— इति निरस्तम्; 'यदि सोमं बिभक्षयिषेत्' इति हि यागीयसोमभक्षप्रत्याम्नायत्वं फलचमसभक्षस्यावगतम्; अतस्तथाविधभक्षणसंबन्धाद्यागीयत्वं तस्योन्नेतुं शक्यते; तत्र भक्षसंबन्धादुन्नीतं यागसाधनत्वमेव विधेयम्; तद्विधौ च फलचमसस्य नैमित्तिकतया सोमचमसविकारत्वेन चोदकतो भक्षस्य प्राप्तत्वादनुवाद इति वाक्यभेदः ॥

इतोऽप्येवमित्याह—

## होमात् ॥ ४९ ॥

'यदन्यांश्चमसाञ्जुह्वत्यथैतस्य दर्भतरुणकेनोपहत्य जुहोति' इति होमानुवादाद्यागो गम्यते, होमस्य यागाविनाभावात् । ननु 'स्वयं वा निषद्य यजति' इति वषट्कारनिमित्तो यजमानस्य ऋतुग्रहभक्षोऽस्तीति पूर्वाधिकरणे स्थितम्; ततश्च तद्यागसाधनत्वमपि न्यग्रोधस्तिभिनीनां कुतो न स्यादित्यत्राप्येतदेव सूत्रमुत्तरम्— 'हु दानादनयोः' इति हुधातुर्भक्षणेऽपि वर्तते; ततश्च 'होमात्' इति सूत्रस्य ऋतुग्रहपात्रे बहूनां भक्षणमित्यर्थः; एकमेव हि ऋतुग्रहपात्रमध्वर्युप्रतिप्रस्थातारौ होत्रादयश्च भक्षयन्ति; तेषां च सोम एव भक्षः; एवं च भूयोनुग्रहन्यायाद्यजमानस्यापि तत्र सोमभक्ष एव युज्यत इति न तत्र स्तिभिनीनां यागसाधनत्वम् ॥

इतोऽपि फलचमसो यागविषये सोमचमसप्रत्याम्नाय इत्याह—

## चमसैश्च तुल्यकालत्वात् ॥ ५० ॥

'यद्राम्यांश्चमसानुन्नयत्यथैतं चमसमुन्नयति' इति यागीयचमसान्तरैः सह फलचमस-सोमयनमेककालकं श्रुतम्; अतोऽपि तस्य यागसाधनत्वमनुमिमीमहे, चमसपात्रविषयत्वं च।

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ ५१ ॥

पूर्वपक्षे तावल्लक्षणमिदं न फलचमससंस्कारः, भूतभाव्युपयोगाभावात्; अतः सक्तुहो-मवद्वारादुपकारकमेवेदं फलचमसभक्षणं वाच्यम्, सोमभक्षणं तु कृतयागकार्यसोमप्रतिपत्त्यर्थम्; अतो भिन्नकार्यत्वान्न फलचमसः सोमभक्षं निवर्तयेत; ततश्च 'न सोमम्' इत्यनुवादो नावकल्पेत। न च 'न सोमम्' इति नानुवादः, किं तु प्रतिषेधविधिरेवायमिति वाच्यम्; फलचमसभक्षस्य सोमभक्षप्रतिषेधस्य च विधौ वाक्यभेदात्, अनेकादृष्टकल्पनापाताच्च। सिद्धान्ते तु फलचमसस्य यागसाधनत्वात्तस्य च सोमचमसविकारत्वाद्यजमानचमसयागप्रयुक्तं भक्षणं तस्यैव प्राप्तम्, न तु सोमस्य, चमसे सोमस्योन्नयनाभावात्। ततश्च 'न सोमम्' इत्यनुवादादपि लिङ्गात्फलचमस इज्याविकारः। वृत्तमधिकरणम्॥

अस्ति राजसूये दशपेयो नाम सोमः। तत्र श्रूयते—'शतं ब्राह्मणाः सोमान्भक्षयन्ति'; 'दश दशैकैकं चमसमनुप्रसर्पेयुः' इति;— भक्षार्थं गच्छेयुरित्यर्थः। तत्र किं यजमानचमसोऽपि ब्राह्मणैरेव दशभिर्भक्षयितव्यः? उत राजन्यैरिति संशये, पूर्वपक्षयति—

## अनुप्रसर्पिषु सामान्यात् ॥ ५२ ॥

'अनुप्रसर्पेयुः' इति विहितभक्षयितृषु मध्ये राजन्या एव यजमानस्य चमसं भक्षयेयुः; कुतः? सामान्यात्— 'राजा राजसूयेन यजेत' इति यजमानस्य राजन्यत्वं प्राप्तम्; एकत्वं

१६. ब्राह्मणानामेव राजन्यचमसानुसर्पाधिकरणम्।

तु चोदकतः प्राप्तम्; तत्र दशत्वं विधीयमानं तुल्यजातीयत्वादेकत्वमेव बाधते, न तु जातिमपि; ततश्चानिवृत्तराजन्यजातिरेव यजमानचमसो दशत्वसंख्यया युज्यत इति दश राजन्यास्तं भक्षयेयुः; 'शतं ब्राह्मणाः' इति ब्राह्मणशब्दस्तु छत्रिन्यायेन राजन्येष्वपि लाक्षणिकः; अनुवादत्वाच्च लक्षणा न दुष्यति; 'शतं ब्राह्मणाः' इति हि 'दश दशैकैकं चमसम्' इति विधिलभ्यसमस्तसंख्यानुवादः। न च 'शतं ब्राह्मणाः' इत्येव विधिः, ततश्च 'समं स्यादश्रुतत्वात्' इति न्यायेन प्रतिचमसं दशसंख्याप्राप्तेः 'दश दश—' इति वाक्यमेवानुवादः किं न स्यादिति वाच्यम्; 'अनुप्रसर्पेयुः' इति विधिप्रत्ययश्रवणेन 'दश दश—' इति वाक्यस्यैव विधित्वात्, 'पिबन्ति' इति वर्तमानापदेशेन 'शतं ब्राह्मणाः' इत्यस्यानुवादत्वात्। तत्र चमसमित्युद्दिश्य दशेति

विधीयते; अनुप्रसर्पणमनूद्यते; अतश्च मसविशिष्टानुसर्पणस्योद्देश्यत्वाभावात् न विशिष्टानुवाददोषः; तथा च प्रत्युद्देश्यं वाक्यपरिसमाप्तिन्यायेन प्राप्तार्थत्वात् 'दश दश' इति वीप्सा, 'एकैकम्' इति चानुवादः इति नानेकविधिप्रयुक्तवाक्यभेदः; तस्मादिह राजन्या एव यजमानचमसं भक्षयेयुः ।

अथ सिद्धान्तयति--

## ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५३ ॥

वाशब्दोऽवधारणे । यजमानचमसमपि ब्राह्मणा एव भक्षयेयुः; कुतः? तुल्यशब्दत्वात्-- 'शतं ब्राह्मणाः पिबन्ति' इति लटा लेड्रूपकल्पनया 'अनुप्रसर्पेयुः' इति लिङ्प्रत्ययान्तेन तुल्यशब्दत्वात् 'समिधो यजति' इत्यादिवद्विधायकत्वादिति यावत् । तत्र 'दश दश' इति विधिलब्धां शतसंख्यामनूद्य 'ब्राह्मणाः' इति तदाश्रयविधिः; ततश्च यजमानचमसे राजन्यजातिर्निवर्तते; सोममिति भक्षयतीति चार्थप्राप्तमिति न विशिष्टोद्देशः; दशैकैकं चमसम्-- इत्येवं ये सोमस्य भक्षयितारस्ते ब्राह्मणाः-- इति वचनव्यक्तिः; 'दश दशैकैकं चमसम्' इति दशत्वसंख्याविधिः, एकैकमित्यादिरनुवादः-- इत्युक्तमेव । एवं च उभयोरपि वाक्ययोर्विधायकत्वादर्थवत्त्वं लभ्यते; ब्राह्मणशब्दे च लक्षणा नाश्रिता भवति; 'शतं ब्राह्मणाः' इति च कृत्स्नमेव वाक्यमनुवादकं चेदनर्थकमेव स्यात् । एवं च दश ब्राह्मणा एव यजमानचमसं भक्षयेयुः; तेनैव च नैराकाङ्क्ष्यान्न यजमानभक्षः; प्रकृतावब्राह्मणस्य सोमभक्षप्रतिषेधाच्च । वृत्तमधिकरणम् ॥

इति तृतीयाध्याये पञ्चमः पादः ॥



# ॥ षष्ठः पादः ॥

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

अनारभ्याधीतहिरण्यभरणजयहोमाश्वप्रतिग्रहेष्टिपानव्यापद्विचारं प्रस्तुते, तत्र सोमवमनप्रसङ्गागतहविःशेषविचारे च वृत्ते सति, षष्ठे पादेऽस्मिन् स एवानारभ्यविचारः प्राधान्येन प्रस्तूयते । 'यस्य खादिरः स्रुवो भवति' 'यस्य पर्णमयी जुहूर्भवति' इत्याद्यनारभ्याम्नानं प्रकृतिविकृतिसाधारणम्, प्रकृतिमात्रविषयं वेति संशये, पूर्वपक्षयति—

१. स्रुवादिषु खादिरतादिविधेः प्रकृतिगामिताधिकरणम् ।

## सर्वार्थमप्रकरणात् ॥ १ ॥

खादिरत्वाद्याम्नानं सर्वार्थं प्रकृतिविकृत्यर्थम् ; कुतः, अप्रकरणात् प्रकरणविशेषाभावात् ॥

अथ सिद्धान्तयति—

## प्रकृतौ वा द्विरुक्तत्वात् ॥ २ ॥

अनारभ्याम्नानं प्रकृतिविषयमेव न तु विकृतिविषयमपि; कुतः, द्विरुक्तत्वात् प्रकृतिमात्रोपदिष्टस्य खादिरत्वादेश्चोदकतो विकृतिष्वपि प्राप्तिसंभवेन तत्र पुनरुपदेशे द्विरुक्तत्वापातात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

## तद्वर्जं तु वचनप्राप्तेः ॥ ३ ॥

तुः-प्रत्यवस्थाने; अनारभ्याम्नानं विकृत्यर्थमप्यस्तु; न च द्विरुक्तिदोषः हि यतः तद्वर्जम् अनारभ्यविहितवर्जम्, प्रकरणाम्नातं प्रयाजादिकमेव चोदकः प्रापयति; कुतः, वचनप्राप्तेः प्रत्यक्षस्यानारभ्यवचनस्यानुमानिकातिदेशप्रवृत्तेः प्रागेव विकृतिषु प्राप्तत्वेन तत्रातिदेशप्रवृत्तेरनारभ्यविहितव्यतिरिक्तविषयत्वावश्यंभावात् ॥

नन्वेवं सति विकृतिषु प्रत्यक्षानारभ्यविहितैरेवोपकाराकाङ्क्षाशान्तौ तत्र प्रयाजादयो न

प्राप्नुयुः; ततश्च सौर्येष्टौ "प्रयाजेप्रयाजे कृष्णलं जुहोति" इति प्रयाजानुवादो नोपपद्येत; अतः प्रकृत्यर्थ एवानारभ्यवादः—

इति सिद्धान्तिनं प्रत्यवतिष्ठमानं पूर्वपक्षी निराचष्टे—

## दर्शनादिति चेन्न चोदनैकार्थ्यात् ॥ ४ ॥

क्वचिद्विकृतौ प्रयाजानुवाददर्शनात् प्रकृत्यर्थोऽनारभ्यवाद इति चेत्, तन्न; कुतः, चोदनैकार्थ्यात्— अनारभ्यवादेन प्राकरणिकविधिभिश्च चोद्यन्ते प्रत्यक्षमुपदिश्यन्त इति चोदनाः खादिरत्वादयः प्रयाजादयश्च, तदुभयेषाम् ऐकार्थ्यात् भिन्नकार्यत्वात्; एकशब्दोऽन्यपर्यायः; "एके मुख्यान्यकेवलाः" इति कोशः; एककार्यत्वे सत्येव वैकृतैरङ्गैः प्राकृताङ्गानि बाध्यन्ते, यथा शरैः कुशादयः; न तु भिन्नकार्यत्वेऽपि; अन्यथा आमनहोमादिभिरपि वैकृतैरङ्गैः प्राकृतानि प्रयाजाद्यङ्गानि बाध्येरन्; तथा च सौर्येष्टौ प्रयाजदर्शनस्य न विरोधः। यद्वा— अनारभ्यविहितैश्चोदकप्राप्ता न बाध्यन्ते; कुतः, चोदनाया अनारभ्यविधेः, ऐकार्थ्यात् एकविधेयकत्वात्, खादिरादिवाक्येषु प्राप्तस्रुवाद्युद्देशेन खादिरत्वादि विधीयते, न तु स्रुवाद्यपि, वाक्यभेदप्रसङ्गात्; स्रुवादि च प्रकृतावुपदिष्टम्, न तु विकृतिषु; अनारभ्यवादश्च प्रकृतिविकृतिसाधारण्येन स्रुवाद्युद्दिश्य खादिरत्वादि प्रत्यक्षमुपदिशन्, विकृतिषु स्रुवाद्यपश्यन्, तत्प्राप्तेरतिदेशाधीनत्वादुद्देश्यस्रुवादिविषये अतिदेशमनुमन्यमान एकदेशानुमत्या सर्वाङ्गविषयमतिदेशमनुमन्यत इति— न सौर्येष्टौ प्रयाजादिदर्शनविरोधः; स च सर्वाङ्गविषयमतिदेशमनुमन्यमानो विकृतिषु स्वप्रवृत्तेर्द्विरुक्तिदोषं पर्यालोच्य स्वविधेयखादिरत्वादिव्यतिरिक्तसर्वाङ्गविषयमेव चोदकमनुमन्यत इति न द्विरुक्तिदोषोऽपि; तस्मात् सर्वार्थोऽनारभ्यवादः॥

ननु स्रुवादीनां प्रकृतावेव प्रत्यक्षोपदेशः विकृतिषु तु अतिदेशतः तत्प्राप्तिः अतः शीघ्रप्रवृत्तिकस्रुवादिद्वारा प्रकृतावन्वय एव खादिरत्वादीनां न्याय्य इति पुनः प्रत्यवतिष्ठमानं सिद्धान्तिनं पूर्वपक्षी निराचष्टे—

## उत्पत्तिरिति चेन्न तुल्यत्वात् ॥ ५ ॥

प्रकृतावेव उत्पत्तिः प्रत्यक्षोपदेशः स्रुवादीनाम्; अतस्तद्द्वारा प्रकृतावेवान्वयोऽनारभ्यवादस्येति चेत्, न, कुतः, तुल्यत्वात्—खादिरत्वादिविधौ हि स्रुवादिप्राप्तिरपेक्षिता, तच्छीघ्रत्वं त्वकिंचित्करम्; अन्यथा प्रकृतावपि तन्निवेशो न स्यात्, कदाचित् कस्यचित् पुरुषस्य प्रकृतिप्रयोगसंबन्धिस्रुवादीनामपि झटित्युपस्थित्यभावसंभवात्; तथा च या औपदेशिकी आतिदेशिकी वा स्रुवादिप्राप्तिः सा सर्वापि प्राप्तित्वेन रूपेण तुल्या। अतस्तदनुवादेन विधीयमानं खादिरत्वादिकं

पदार्थेष्वेव; तथा च यथा सर्वपदार्थगोचरस्यापि चोदकस्य प्रत्याम्नातप्रतिषिद्धलुप्तद्वारान् पदार्थान्वर्जयित्वा पर्यवसानं तथा प्रत्यक्षाम्नातखादिरत्वादिकमपि वर्जयित्वा पर्यवसानसंभवान्न द्विरुक्तिदोषः। तदेवम् 'तद्वर्जं तु वचनप्राप्तेः' इति पूर्वपक्षः स्थितः॥

अथ सिद्धान्ती प्रत्याचष्टे—

## चोदकार्थकार्त्स्न्यात्तु मुख्यस्य विप्रतिषेधात् प्रकृत्यर्थः॥ ६॥

तुरवधारणे। प्रकृत्यर्थ एवानारभ्यवादः, न तु विकृत्यर्थोऽपि, द्विरुक्तिदोषप्रसङ्गात्। यत्तु 'तद्वर्जं तु वचनप्राप्तेः' इति तत्राह— चोदकार्थकार्त्स्न्यादिति। विकृतिषु चोदकतः प्रापणीय उपकारः चोदकार्थः, तस्य कार्त्स्न्यात् कृत्स्नपदार्थविशिष्टाखण्डोपकाररूपत्वात्। न हि प्रतिपदार्थं चोदको भिद्यते, येनानारभ्यविहितव्यतिरिक्तपदार्थेष्वेव चोदकाश्रयणात्तद्वर्जं प्राप्तिर्युज्येत। नैवमस्ति, तत्तत्पदार्थसाध्यदृष्टादृष्टावान्तरव्यापारनिचयात्मकाखण्डोपकारस्यातिदेश इति दशमे वक्ष्यमाणत्वात्। न चैवमपि पदार्थानां प्रत्येकमुपकारविशेषणतया चोदकस्य कतिपयपदार्थवर्जं प्रवृत्तिः संभवतीति वाच्यम्, समुच्चितानामेव पदार्थानामुपकारविशेषणत्वस्य वक्ष्यमाणत्वात्। ततश्चानारभ्यविहितवर्जं चोदकः प्रापयतीत्यनुपपन्नम्। यदप्युक्तम्— चोदकप्रवृत्तेः प्रागेव प्रत्यक्षमनारभ्यवचनं प्रवर्तत इति तदप्यसिद्धमित्याह— मुख्यस्य विप्रतिषेधादिति। मुख्यस्य प्रथमप्रमाणप्रत्यक्षगोचरानारभ्यवादस्य विप्रतिषेधात् अतिदेशप्रवृत्तेः प्राक्प्रवृत्तिविरोधात्। प्रत्यक्षानुमानयोर्हि शीघ्रमन्थरप्रवृत्तिकृतं बलाबलम्; इह च प्रत्यक्षस्याप्यनारभ्यवादस्य स्रुवादिप्राप्तिसापेक्षत्वान्न शीघ्रं प्रवृत्तिः, किं तु स्रुवादिप्राप्तिमुपजीव्यैव प्रवृत्तिरिति अनुमानस्यैव शीघ्रं प्रवृत्तिः; ततश्च प्रत्यक्षस्याप्यनारभ्यवादस्य चोदकबाधकत्वासंभवात् न प्रत्याम्नानप्रतिषेधद्वारलोपस्थल इव चोदकस्य तद्व्यतिरिक्तपदार्थेषु पर्यवसानम्; एवं च यस्यानारभ्यवादस्यातिदेशिकपदार्थानपेक्षत्वम्, तत्र प्रत्यक्षस्य तस्य शीघ्रप्रवृत्तेः प्रकृतिविकृतिसाधारण्यमेव— यथा 'अग्निष्टोमे वृणक्ति' इत्यादौ; न हि तत्र विकृत्यग्निष्टोमस्यातिदेशिकतास्ति; एवं च चोदकत एव खादिरत्वादीनां विकृतिषु प्रवृत्तिसंभवात् अनारभ्यवादस्य विकृतिसाधारण्ये द्विरुक्तिदोषप्रसङ्गात् प्रकृतिमात्रविषयत्वमेवाश्रयणीयम्॥

प्रयोजनम्— पूर्वपक्षे अनारभ्यविहितपदार्थाश्रितगुणकामानां विकृतिषु प्रवृत्तिः, सिद्धान्ते तु अप्रवृत्तिरिति॥ वृत्तमधिकरणम्॥

'सप्तदश सामिधेनीरनुब्रूयात्' इत्यनारभ्यवादः प्रकृतौ निविशते, उत विकृतिष्वेवेति संशयः। पूर्वाधिकरणन्यायात् प्रकृतिविषयत्वम्; न च 'पञ्चदश सामिधेनीरनुब्रूयात्' इति

प्रकरणविहितपाञ्चदश्यविरोध इति वाच्यम्, अत एव विकल्पसंभवात्। ननु पाञ्चदश्यं प्रकरणोपस्थापितदर्शपूर्णमासात्मकक्रतुविशेषसंबन्धितया विहितत्वात् प्रबलम्, साप्तदश्यं तु क्रत्वव्यभिचरितसामिधेन्युपस्थितक्रतुसामान्यसंबन्धितया विहितत्वाद्दुर्बलमित्यतुल्यबलत्वान्न विकल्पसंभवः किं तु विशेषविहितपाञ्चदश्येन साप्तदश्यबाध एवोचित इति चेत्, सत्यम्— पाञ्चदश्यवाक्यमपि साप्तदश्यवाक्यवत् शब्दमर्यादया पाञ्चदश्यस्य सामिधेनीमुखेन क्रतुसामान्यसंबन्धमेव बोधयति; तस्य दर्शपूर्णमासात्मकक्रतुविशेषसंबन्धस्तु प्रकरणाल्लभ्यते; प्रकरणं च वाक्याद्दुर्बलम्; ततश्च विशेषस्य तुल्यप्रमाणकत्वाभावात् न सामान्यबाधकत्वम्; ततश्च यावत् प्रकरणं व्याप्रियते, ततः प्रागेव शाब्दमर्यादया तुल्यबलेन वाक्यद्वयेन विकल्पेऽवधारिते सति पश्चादुन्मिषदपि प्रकरणं दुर्बलत्वान्नानुसर्तव्यम्; तस्मात्प्रकृतौ पाञ्चदश्येन साप्तदश्यस्य विकल्प इति प्राप्ते—

सिद्धान्तयति—

## प्रकरणविशेषात्तु विकृतौ तद्विरोधि स्यात् ॥ ७ ॥

तुरवधारणे। साप्तदश्यवादः विकृतिष्वेव स्यात्, न तु प्रकृतौ; यतः प्रकृतौ साप्तदश्यं तेन पाञ्चदश्येन विरुध्यते। न च विकल्पः। कुतः, प्रकरणविशेषात्— पाञ्चदश्यस्य प्रकरणकृतवैलक्षण्यात्। तथाहि— पाञ्चदश्यसाप्तदश्ययोः शाब्दमर्यादया स्वरूपेण सामिधेनीसंबन्धस्यावगम्यमानस्य आनर्थक्यापत्त्या नावमिकाद्याधिकरणन्यायेन सामिधेनीशब्देनापूर्वसाधनतापन्नसामिधेनीर्लक्षयित्वा अपूर्वसाधनत्वरूपेण तयोः सामिधेनीसंबन्धो वाच्यः; अपूर्वसाधनरूपलक्षणा च पाञ्चदश्यवाक्ये झटिति प्रवर्तते, प्रकरणबलात्; साप्तदश्यवाक्ये तु अपेक्षितापूर्वसाधनरूपस्य झटित्युपस्थापकप्रमाणाभावात् सामिधेनीशब्देन तदुपस्थितेः तल्लक्षणा न शीघ्रं प्रवर्तते, ततश्च बलवता पाञ्चदश्येन प्रकृतौ बाधितत्वाद्विकृतिष्वेव साप्तदश्यं निविशते ॥ वृत्तमधिकरणम् ॥

२. सामिधेनीनां सप्तदशसंख्याया विकृतिगामिताधिकरणम्।

दर्शपूर्णमासयोः श्रूयते—'पञ्चदश सामिधेनीरन्वाह' 'सप्तदशानुब्रूयाद्वैश्यस्य' इति। तदिदं साप्तदश्यं विकृतिषु, प्रकृतौ वेति संशयः। तत्र प्रकृतेः पाञ्चदश्यावरुद्धत्वात् साप्तदश्यस्य अनारभ्यविहितसाप्तदश्यवत् विकृतिषूत्कर्षः। न च विनिगमनाविरहः, ब्राह्मणकर्तृकप्रकृतिप्रयोगे साप्तदश्यस्याप्रवृत्त्या तत्र निर्बाधस्यास्य पाञ्चदश्यस्य लब्धात्मकताया एव विनिगमकत्वात्। अथ वा द्वयोरप्यनयोः पाञ्चदश्यसाप्तदश्यवाक्ययोः प्रकरणाधीतत्वेन पूर्ववत् सामिधेनीशब्दे लक्षणाप्रवृत्तौ शैघ्र्यमान्द्यकृतविशेषाभावात् प्रकृतौ पाञ्चदश्यसाप्तदश्ययोः विकल्पः इति प्राप्ते—

सिद्धान्तयति—

## नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥ ८ ॥

तुर्वैषम्ये। प्रकृतेः पाञ्चदश्यावरुद्धत्वादनारभ्यविहितं साप्तदश्यं विकृतावेव निविशत इति युक्तम्; इदं तु नैमित्तिकं वैश्यत्वनिमित्तकं साप्तदश्यम्, प्रकृतौ, तद्विकारः तस्य पाञ्चदश्यस्य विकारः प्रत्याम्नायः बाधकं सत्, निविशते। कुतः। संयोगविशेषात् पाञ्चदश्यसाप्तदश्ययोः नित्यनैमित्तिकसंयोगभेदात्।

३. नैमित्तिकसाप्तदश्यस्य प्रकृतिगामिताधिकरणम्।

पाञ्चदश्यविधिस्तावत् प्रकरणाविशेषात् दर्शपूर्णमासप्रयोगसामान्यविषयः; स च विशेषविषयत्वं विनानुष्ठानपर्यवसानाभावात् सामान्यमुखेन तत्तत्प्रयोगविशेषान् लक्षयित्वा पर्यवस्यति; यावच्च लक्षणया वैश्यकर्तृकप्रयोगविषयीभवितुमुत्सुकं, ततः प्रागेव विशिष्य वैश्यशब्देन विधीयमानं साप्तदश्यं वैश्यकर्तृकप्रयोगे प्रवर्तत इति बलवद्भवति। तथा नित्यस्य निमित्तानपेक्षतया पूर्वमेव प्रवृत्तिः; नैमित्तिकस्य तु निमित्तानुसंधानसापेक्षतया पश्चात्प्रवृत्तिः; तत्र नित्यस्य प्रवृत्तिवेलायां नैमित्तिकस्यासंजाततया नैमित्तिकमबाधित्वैव प्रवृत्तिः, नैमित्तिकं तु नित्ये प्रतिपक्षे उत्पन्ने सति तद्विज्ञानावस्थायामेवोत्पत्तुमुत्पन्नज्ञानं न नित्यमबाधित्वा उत्पत्तुमर्हति; ततश्च— 'पूर्वं परमजातत्वादबाधित्वैव जायते। परस्यानन्तरोत्पादात् पूर्वाबाधे न संभवः।' इत्यपच्छेदाधिकरणन्यायेन नैमित्तिकं साप्तदश्यं पश्चादुत्पन्नमेव बलवत्। तथा पाञ्चदश्यं ब्राह्मणराजन्यविषये सावकाशम्; साप्तदश्यं तु वैश्यादन्यत्र निरवकाशमिति तदेव बलवत्। तस्मात्प्रकृतावेव वैश्यप्रयोगे पाञ्चदश्यं बाधित्वा साप्तदश्यं निविशते, अनुपदिष्टसाप्तदश्यास्वपि विकृतिषु वैश्यस्य प्रकृतिवत्साप्तदश्यमेव, न तु पाञ्चदश्यमपि। तदेवं सूत्रगतनैमित्तिकपदानुसारेण नैमित्तिकसाप्तदश्यविषयमिदमधिकरणमुपवर्णितं भाष्ये॥

वार्तिके तु 'चमसेनापः प्रणयेत्' 'गोदोहनेन पशुकामस्य' इति काम्यविषयमेवेदमधिकरणं वर्णितम्। युक्तं चैतत्, नैमित्तिकसाप्तदश्यस्य प्रकरणाम्नानानर्थक्येन विकृतौ तदुत्कर्षपूर्वपक्षस्य सावकाशनिरवकाशादिस्थले विकल्पाप्रसक्त्या विकल्पपूर्वपक्षस्य चातिमन्दत्वात्। काम्योदाहरणे तु पूर्वपक्ष एवमुन्मिषति। प्रकृतिप्रयोगस्य सर्वस्यापि चमसेनावरुद्धत्वात् काम्यं गोदोहनं विकृतावर्थवदुत्कृष्यते। न च सामान्यविशेषविहितत्वाद्युक्तहेतुत्रयेण काम्यगोदोहनेन नित्यश्चमसो बाध्यतामिति वाच्यम्; नित्यपाञ्चदश्यनैमित्तिकसाप्तदश्ययोः क्रतूपकारलक्षणकार्यैक्यादस्ति विरोध इति बाध्यबाधकभावो युज्यते, इह तु चमसः क्रत्वर्थः गोदोहनं तु पश्वर्थमिति भिन्नविषयतया विरोधाभावान्न चमसस्य गोदोहनेन बाधो युज्यते। अथापि यदि बाध्येत, तर्हि क्रतोर्विगुणत्वात्तदाश्रितगोदोहनात् कथं फलं स्यात्; ततश्च 'पश्यतो मधुबिन्दुं तु जीर्णशाखाधिरोहणात्। मन्दबुद्धे

स्त्वश्यं तु विनिपातस्ततो भवेत्' इति न्यायः आश्रितः स्यात्। अतो विकृतिरेव गोदोहनस्य गतिः। यदि तु विकृतावपि चमसबाधे क्रतुवैगुण्यात्तत्रापि गोदोहनस्य न निवेशसंभवः, तर्हि लौकिकमेवापां प्रणयनं गोदोहनस्य गतिरस्तु, 'आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः' इत्यादौ लौकिकभोजनाद्याश्रितादपि गुणात् फलदर्शनात्। यद्वा फलाय गुणविधिबलात् गुणफललाभार्थमपां प्रणयनस्याभ्यास आक्षिप्यते— यथा ऐन्द्रवायवग्रहे मित्रावरुणादिदेवतान्तरनिवेशासंभवात् मित्रावरुणादिदेवत्यग्रहयागाभ्यासान्तरम् 'मैत्रावरुणं गृह्णाति' इत्यादिविधिबलादाक्षिप्यते तद्वत्। एवं च क्रत्वर्थं चमसेनापः प्रणीय पश्वर्थं गोदोहनेनापः प्रणेतव्याः। तदेवं पूर्वपक्षद्वये, प्राप्ते, सिद्धान्तः—

**नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषादिति**— अत्र नैमित्तिकमित्यनेन कादाचित्कतया काम्यं गोदोहनं विवक्षितम्। प्रकृतौ, तद्विकारः— तं चमसं विकरोति बाधते नित्यानित्यसंयोगकृतवैलक्षण्यादित्यर्थः तत्र बाध्यबाधकभावे त्रयो हेतवः पूर्वमुक्ताः, ते अत्राप्यनुसंधातव्याः। किं च काम्यं गोदोहनं फलस्य प्रत्यासन्नं शीघ्रं प्रयुज्यते, तस्य क्रतूपकारद्वारा फलोपयोगात्; ततश्च पुरुषार्थप्रत्यासन्नत्वाद्गोदोहनं बलवत्; तेन चमसस्य बाधः। ननु भिन्नविषयत्वात्कथं बाध्यबाधकभाव इत्यत्राप्येतदेवोत्तरम्— संयोगविशेषादिति। चमसो गोदोहनं च येन द्वारेण संयुज्यते, तद्विशेषात् प्रणयनरूपद्वारविशेषस्य एकत्वादिति यावत्। सत्यपि कार्यभेदे द्वाराभेदादस्ति विरोधः। ततश्च पशुकामप्रयोगादन्यस्मिन् प्रकृतिप्रयोगे चमसः प्रणयनं साधयति; पशुकामप्रयोगे तु गोदोहनेन चमसो बाध्यते; बाधितत्वादेव चमसस्य नास्ति पशुकामप्रकृतिप्रयोगे चमसाभावकृतं वैगुण्यम्, पशुकामप्रयोगवेलायां चमसस्य बाधितत्वेनानङ्गत्वात्— यथा कृष्णलेष्ववघातस्य बाधितत्वात्तदभावकृतं न वैगुण्यं तद्वत्॥ वृत्तमधिकरणम्॥

'अग्नीनादधीत' 'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये' इति श्रुतम्। तत्राग्न्याधेयं पवमानेष्ट्यङ्गं न वेति संशये, पूर्वपक्षयति—

## इष्ट्यर्थमग्न्याधेयं प्रकरणात्॥ ९॥

४. आधानस्य पवमानेष्ट्यङ्गताधिकरणम्।

पवमानेष्ट्यर्थमग्न्याधेयम्। कुतः, प्रकरणात्। ननु नास्ति पवमानहविषां प्रकरणम्, फलाश्रवणात्; कथमिदं फलमनेन कर्तव्यमित्याकाङ्क्षैव हि प्रकरणम्; किं च फलवत्संनिधावफलं तदङ्गम्; आधानं च 'अग्नीन्' इति स्ववाक्यगतद्वितीयानिर्दिष्टाग्निभिरेव फलवदिति कथं तस्य पवमानेष्ट्यङ्गता; प्रत्युत पवमानेष्टीनामेवाफलत्वात् फलवदाधानाङ्गत्वमुचितमिति चेत्, सत्यम्— पवमानेष्टीनामस्ति प्रकरणम्, तत्र विश्वजिन्न्यायेन

फलकल्पनात्, रात्रिसत्रन्यायेन 'पुनात्येवैनम्' इत्यार्थवादिकफलकल्पनाद्वा । आधानस्य तु नाग्नयः फलम्, तेषां स्वतोऽपुरुषार्थत्वात् । ततश्च यथा द्वितीयाश्रुत्या प्रोक्षणादीनां व्रीहिमात्रार्थत्वावगमेऽपि प्रकरणाद्दर्शपूर्णमासापूर्वीयव्रीह्यर्थत्वम्, एवमाधानस्यापि प्रकरणात् पवमानेष्ट्यपूर्वीयाग्निसंस्कारकत्वम् । सन्ति हि पवमानेष्टिष्वपि अतिदेशप्राप्ता अग्नयः । तथा च द्वितीयाश्रुतिसहितात् प्रकरणादतिदेशप्राप्ताग्निसंस्कारद्वारा पवमानेष्ट्यङ्गमाधानम् ॥

अथ सिद्धान्तयति—

## न वा तासां तदर्थत्वात् ॥ १० ॥

वा-शब्द एवार्थे । नैवाग्न्याधेयं पवमानेष्ट्यङ्गम् । कुतः । तासां पवमानेष्टीनां तदर्थत्वात् । आधानं हि द्वितीयावगतसाध्यताकाग्न्यर्थमेव अग्नीनां स्वतः पुरुषार्थत्वाभावेऽपि फलवदग्निहोत्राद्यर्थतया पश्वादिवत् फलत्वोपपत्तेः । पवमानेष्टयोऽप्याधानवदग्न्यर्था एव । तासां संनिधौ हि 'यदाहवनीये जुहोति' इत्यादिवाक्यानि श्रूयन्ते ; तत्र हि पवमानेष्टिषु होमाधारतया आहवनीयादीनां विधानं न संभवति, पवमानेष्टिदशायामाहवनीयादिस्वरूपनिष्पत्त्यभावात् ; न ह्याधानमात्रात् तत्स्वरूपनिष्पत्तिः शङ्क्या, तथा सति तदुत्पन्नानामाहवनीयादीनाम् 'यदाहवनीये जुहोति' इत्याद्यनारभ्याधीतवाक्यान्तरैः प्रकृतिभूतदर्शपूर्णमासौ प्राप्तानां चोदकत एव पवमानेष्टिष्वपि प्राप्तिसंभवेन तत्संनिधौ 'यदाहवनीये जुहोति' इत्यादिपुनराम्नानानर्थक्यापातात् । तस्मात् पवमानेष्टिसंनिधावाम्नातेषु 'यदाहवनीये जुहोति' इत्यादिवाक्येषु सप्तम्या द्वितीयार्थलक्षकत्वम् जुहोतेश्च होमसंयुक्तपवमानेष्टिलक्षकत्वमाश्रित्य 'पवमानेष्टिभिराहवनीयाद्यग्नीन्कुर्यात्' इत्येवं पवमानेष्टीनामग्न्यर्थत्वं विधीयते । एवं च पवमानेष्टिषु विश्वजिदादिन्यायेन फलकल्पनाक्लेशोऽपि न कर्तव्यः । ततश्च आधानवत्पवमानेष्टीनामप्यग्न्यर्थत्वात् 'गुणानां च परार्थत्वात्' इति न्यायेनाधानस्य न पवमानेष्ट्यङ्गत्वमिति भाष्यानुयायी पन्थाः ॥

पवमानेष्टिसंनिधौ 'यदाहवनीये जुहोति' इत्यादिवाक्यान्तराणि न सन्त्येवेति वार्तिकमते तु सूत्रमेवं योजनीयम्— नैवाधानं पवमानेष्ट्यङ्गम्, पवमानेष्टीनामाधानार्थत्वात् इति । आधानं हि स्ववाक्यश्रुताग्निभिः फलवत्; तत्संनिध्याम्नानात् पवमानेष्टयः अश्रुतफलास्तदङ्गमिति युज्यते; पवमानेष्टिषु विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा फलं कल्पयित्वा तत्प्रकरणपठितमग्न्याधेयं तदङ्गमिति कल्पनायाः क्लिष्टत्वात् । अस्मिन् व्याख्याने तदर्थत्वादित्येतत्समञ्जसं भवति; तच्छब्दस्य पूर्वसूत्रोपात्ताग्न्याधेयपरामर्शितायाः उचितत्वात् । अग्न्यर्थत्वादिति व्याख्यानञ्च च क्लिष्टत्वात् तासां साक्षादग्न्यर्थत्वे प्रमाणाभावाच्च । तत्संनिधौ 'यदाहवनीये जुहोति' इत्यादिवाक्यान्तराणि तु गगनकुसुमकल्पानि । सन्तु वा तानि, तथापि आधानाङ्गभूतपवमानेष्टिहोमेषु

आहवनीयादिप्रापकाण्येव तानि स्युः। न चानारभ्याधीतयदाहवनीयादिवाक्यान्तरतस्तत्प्राप्तिः, पवमानेष्टिवेलायामाहवनीयादिस्वरूपनिष्पत्त्यभावात्, पवमानेष्टीनामाधानाङ्गतया तत्सहिताधानस्यैवाहवनीयादिस्वरूपनिष्पादकत्वात्। न चैवं सति पवमानेष्टिषु संनिधिपाठितैर्यदाहवनीयादिवाक्यैर्वा कथमाहवनीयादिप्राप्तिः, तदानीमाहवनीयादिस्वरूपनिष्पत्त्यभावादिति वाच्यम्; तदानीं परमापूर्वोत्पत्त्यभावेन आहवनीयादिस्वरूपनिष्पत्त्यभावेऽपि आधानमात्रजन्योत्पत्त्यपूर्वविशिष्टाग्न्यधिकरणकत्वप्रापणार्थत्वात्। एवं च सप्तम्या द्वितीयार्थलक्षकत्वं जुहोतेश्च होमसंयुक्तपवमानेष्टिलक्षकत्वं नाश्रयितव्यं भवति। तस्मादग्न्याधेयं न पवमानेष्ट्यङ्गम्, पवमानेष्टयस्त्वाधानाङ्गम्, आधानवदग्न्यर्था वेति स्थितम्। प्रयोजनं पूर्वपक्षे स्वर्गाद्यर्था पवमानेष्टयः, तदङ्गभूताग्निसंस्कारकमाधानम्, तदुत्पन्नाग्निषु पवमानेष्टिभ्यः प्रागप्यग्निहोत्राद्यारंभः; सिद्धान्ते तु सेष्ट्याधानमग्न्यर्थम्, न पवमानेष्टिभ्यः प्रागग्निहोत्राद्यारम्भः॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ ११ ॥

'जीर्यति ह वा एष आहितो यदग्निः, तदेतान्यग्न्याधेयस्य हवींषि संवत्सरे संवत्सरे निर्वपेत, तेनैष न जीर्यति, तेनैवैनं पुनर्नवं करोति' इति श्रूयते। अत्र 'एतान्यग्न्याधेयस्य हवींषि' इति पवमानहविषामग्न्याधेयसंबन्धित्वेन कीर्तनं तेषामाधानद्वारा साक्षाद्वाग्न्यर्थत्वे अवकल्पते, नान्यथा। अतोऽपि हेतोः सेष्ट्याधानमग्न्यर्थम्॥ वृत्तमधिकरणम्॥

अग्न्यर्थमाधानमिति स्थितम्। तत्किमग्निद्वारा प्रकृत्यङ्गम्, ततश्च चोदकतो विकृत्यङ्गमपि; उत न प्रकृत्यङ्गं नापि विकृत्यङ्गम्, किं त्वग्निमात्राङ्गमिति संशये, पूर्वपक्षयति——

## तत्प्रकृत्यर्थं यथान्येनारभ्यवादाः ॥ १२ ॥

तत् अनारभ्यविहितमग्न्याधेयं प्रकृत्यर्थम्, चोदकतस्तु विकृत्यर्थमपि, 'प्रकृतौ वा द्विरुक्तत्वात्' इति न्यायात्— यथा अन्ये अनारभ्यवादाः 'यस्य खादिरः स्रुवो भवति' इत्यादयः॥

अथ सिद्धान्तयति—

## सर्वार्थं वाधानस्य स्वकालत्वात् ॥ १३ ॥

वाशब्दोऽवधारणे। अग्निमात्रार्थमेवाधानम्, यदग्नि आहवनीयाद्यग्निभिः शक्यते कर्तुम्—यथा प्रकृतिः विकृतिः तदुभयविलक्षणमपूर्वकर्म चाग्निहोत्रादि—तत्सर्वार्थमेवाधानमग्निद्वारेत्येतत्तु

५. आधानस्य सर्वार्थताधिकरणम् । आर्थिकम्; नन्वेतावता आधानस्य सर्वकर्माङ्गत्वं सिध्यति। कुतः। आधानस्य स्वकालत्वात्— कालैरनेकार्थकः। स्वतन्त्रतया आम्नातत्वात्; क्रतूपस्थापकप्रमाणाभावादिति यावत्। अङ्गत्वं हि श्रुत्यादिप्रमाणैकगम्यम्; न तु वस्तुतः साधकतामात्रेणाङ्गत्वं भवति, तथा सति व्रीह्यादियागेषु कर्षणादेरप्यङ्गत्वापत्तेः। न च यथानारभ्यविधीयमानं खादिरत्वादिकं स्रुवादिस्वरूपे आनर्थक्यात् क्रत्वपूर्वसाधनत्वलक्षणया वाक्यादेव क्रत्वङ्गं संपद्यते, तद्वदाधानमप्याहवनीयाद्यग्निस्वरूपे आनर्थक्यात् अपूर्वसाधनत्वलक्षणया वाक्यादेव क्रत्वङ्गं भवतीति वाच्यम्; वैषम्यात्। स्रुवजुह्वादिशब्दा हि 'अङ्गुष्ठपर्ववृत्तपुष्करः स्रुवः', 'अर्धप्रादेशपुष्करा हंसमुख्यः स्रुचः' इत्याद्याकृतिविशेषवाचकाः। न च तत्र खादिरत्वादिजातिविशेषोऽपि प्रवृत्तिनिमित्तम्, क्वचित् 'पालाशः स्रुवः' इत्यादिदर्शनात्। अतो जातिविशेषानियमः तत्र विधेयः। स च स्वरूपेणाकृतिविशेषार्थत्वे अनर्थक्यात् क्रत्वपूर्वीयत्वलक्षणया आकृतिविशेषार्थतया विधातव्यः इति युक्तम्। तथा च 'क्रत्वपूर्वसाधनस्रुवादयो ये ते खादिरादिप्रकृतिकाः' इति वचनव्यक्तिः। इह तु आहवनीयादिस्वरूपस्य केवलमलौकिकतया तस्याधानेन विना सिद्ध्यनवगमात् 'आहवनीयाद्यग्नयो ये, तानाधानेन संस्कुर्यात्' इति वचनव्यक्तिर्न संभवति; किं तु 'आधानेनाहवनीयादिस्वरूपं निष्पादयेत्' इति वचनव्यक्तिः। ततश्चाहवनीयादिस्वरूपनिष्पत्तये आधानस्य विधावानर्थक्याभावान्न क्रत्वपूर्वीयत्वलक्षणा आश्रयणीया। आहवनीयाद्यग्नीनां च स्वतः पुरुषार्थत्वाभावेऽपि आहवनीयाद्यङ्गकफलवत्सर्वक्रत्वर्थत्वान्न विरोधः। प्रयोजनम्—पूर्वपक्षे प्रकृतिभूतदर्शपूर्णमासज्योतिष्टोमेषु तद्विकृतिष्वेव चाहवनीयाद्यग्नयः स्युः, न त्वपूर्वे अग्निहोत्रादिकर्मणि, आधानस्यानारभ्याधीतत्वेन प्रकृतिगामितया तद्विकारेष्वप्रवृत्तेः; तेषामाहवनीयाद्यग्नयस्तु क्रयादिभिः संपाद्याः; सिद्धान्ते तु तेष्वपि स्वाधानसिद्धा एवाग्नय इति ॥ वृत्तमधिकरणम् ॥

पवमानेष्टिषु तदङ्गतया पवमानेष्टयः कर्तव्या न वेति संशये, पूर्वपक्षयति—

## तासामग्निः प्रकृतितः प्रयाजवत् ॥ १४ ॥

तासां पवमानेष्टीनाम्, अग्निः, जातावेकवचनम्, आहवनीयाद्यग्नयः, पवमानेष्टिसंस्कृताः, प्रकृतितः दर्शपूर्णमासतः, प्राप्नुवन्ति। दर्शपूर्णमासयोर्हि पवमानेष्टिसंस्कृता अग्नयोऽङ्गमिति

६. पवमानेष्टीनामसंस्कृतेऽग्नौ कर्तव्यताधिकरणम्। पवमानेष्टयोऽप्यग्निद्वारा दर्शपूर्णमासाङ्गम्; अतस्तद्विकृतिभूतपवमानेष्टिष्वपि पवमानेष्टिसंस्कृता एवाग्नयोऽङ्गतया प्राप्तुमर्हन्ति। प्रयाजवत्, यथा दर्शपूर्णमासाङ्गभूताः प्रयाजादयः पवमानेष्टिषु प्राप्नुवन्ति।

अथ सिद्धान्तयति —

## न वा तासां तदर्थत्वात् ॥ १५ ॥

वा-शब्दोऽवधारणे । नैव पवमानेष्टिषु पवमानेष्टयः प्रकृतितः प्राप्नुवन्ति । कुतः । तासां पवमानेष्टीनां पूर्वाधिकरणन्यायेनाग्निमात्रार्थत्वात्, प्रकृतिभूतदर्शपूर्णमासोपस्थापकप्रमाणाभावेन तदङ्गत्वाभावात्, आर्थिकस्य चानङ्गत्वात्, अनङ्गस्य चातिदेशाभावात्; अन्यथा गुणकामानामपि विकृतिष्वतिदेशापत्तेः । अस्तु वा पवमानेष्टीनां प्रकृत्यङ्गत्वम्; तथापि न तासां पवमानेष्टिष्वतिदेशोऽवकल्पते; पवमानेष्टयो हि कथंभावाकाङ्क्षिण्यः प्रकृतिं पश्यन्त्यः तदानीं प्रकृतेः पवमानेष्टिशून्यत्वात् तद्व्यतिरिक्तमेवाङ्गजातं गृहीत्वा शान्ताकाङ्क्षाः सत्यः न पवमानेष्टीः आत्मानमपि ग्रहीतुं प्रभवन्ति; ततश्च पवमानेष्टिविधिदशायां पवमानेष्टीनां दर्शपूर्णमासाङ्गतया अक्लृप्तत्वान्न तासां तास्वतिदेश इति फलितम् । असंभवाच्च— न ह्येकस्यैव शेषित्वं शेषत्वं च संभवति । न च पवमानेष्टीनामन्याः पवमानेष्टयोऽङ्गमिति व्यक्तिभेदान्न विरोध इति वाच्यम्; या हि पवमानेष्टयः प्रथमं क्रियन्ते, ताभिः किमाहवनीयाद्यग्नयो जायन्ते, न वा; नान्त्यः, वैयर्थ्यात्; नाद्यः, प्राथमिकीभिरेव ताभिः आहवनीयाद्यग्निरहिताभिराहवनीयाद्यग्निसिद्धौ तदुत्तरासां वैयर्थ्यात् । तस्मान्न पवमानेष्टिषु पवमानेष्टयः ॥ वृत्तमधिकरणम् ॥

सन्ति ज्योतिष्टोमे त्रयः पशवः अग्नीषोमीयः सवनीयः अनूबन्ध्यश्चेति । तत्र अग्नीषोमीयस्तावत् प्रायणीयाहे सोमक्रयसंनिधावुत्पन्नः 'आसोमं वहन्ति' इत्युपक्रम्य 'यदग्नीषोमीयं पशुमालभते' इति । तस्य च 'स एष उपवसथीयेऽहन् द्विदेवत्यः पशुरालभ्यते' इति वचनात् सोमक्रयाहादन्यस्मिन्नहनि सुत्यादिनात्पूर्वस्मिन् अनुष्ठानम् । सुत्यायाः पूर्वदिनमुपवसथीयमित्युच्यते । अहन्नित्यत्र सुपां सुलुगिति सप्तम्या लुक् । सुत्याहे सवनीयः पशुराम्नातः— 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इति । अन्यच्चाग्निष्टोमीयपशुसंनिधावस्ति वाक्यम्— 'आग्नेयः सवनीयः पशुरग्निष्टोम आलभ्यते' इति । अनूबन्ध्यस्तु पशुः अवभृथोत्तरोदयनीयानन्तरमुत्पन्नः 'मैत्रावरुणीं वशामनूबन्ध्यामालभते' इति । पशुधर्मास्तु अग्नीषोमीयपशुसंनिधावाम्नाताः— 'यूपं छिनत्ति' 'यूपे पशुं नियुञ्जन्ति' इत्यादयः । ते किं त्रयाणामपि पशूनां साधारण्येन विधीयन्ते, उत सवनीयपशोरेव, अथवा अग्नीषोमीयसवनीयपश्वोः, किं वा अग्नीषोमीयपशोरेवेति संशयः ।

७. उपाकरणादीनामग्नीषोमीयधर्मताधिकरणम् ।

तत्र पूर्वपक्षयति—

## तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १६ ॥

पशुविधिः पशुधर्माम्नायः, तुल्यः पशुत्रयसाधारणः प्रत्येतव्यः। कुतः। प्रकरणाविशेषात् — त्रयोऽप्येते पशवः ज्योतिष्टोमप्रकरणे विहिताः, तथा पशुधर्माश्च; ततश्च पशुस्वरूपे तेषामाम्नानानर्थक्यापत्त्या लक्षणया अपूर्वसाधनपश्वर्थत्वे सति प्रकरणाविशेषात् ज्योतिष्टोमगतसर्वपशुयागार्थत्वं विज्ञायते। अथ द्वितीयपक्षपरतयाप्येतदेव सूत्रं योज्यम्—पशुविधिः, जातावेकवचनम्, यूपच्छेदननियोजनादिधर्मविधिः, महाप्रकरणाविशेषात्, तुल्यः पशुत्रयसाधारणः संभाव्येत; इह तु सवनीयपश्ववान्तरप्रकरणेन महाप्रकरणं बाध्यते, 'आग्नेयः सवनीयः पशुरग्निष्टोम आलभ्यते' इति सवनीयपशूत्पत्तिसंनिधौ औपवसथ्येऽहनि पशुधर्माणामनुक्रमणात्॥

अथ तृतीयपक्षमुपक्षिपति—

## स्थानाच्च पूर्वस्य॥ १७॥

चो भिन्नक्रमः। पशुधर्माः अवान्तरप्रकरणात् सवनीयपशोर्भवन्ति, स्थानप्रमाणात् पूर्वस्य च अग्नीषोमीयपशोरपि। तस्य ह्यग्नीषोमीयपशोरौपवसथ्यमहरुत्पत्तिस्थानम्, क्रयसंनिधावुत्पन्नस्यापि तस्य 'स एष उपवसथीयेऽहन् द्विदेवत्यः पशुरालभ्यते' इति तत्रोत्कर्षविधानात्। पशुधर्माश्च औपवसथ्येऽहन्येव समाम्नाता इति स्थानप्रमाणात्तस्यापि ते विज्ञायन्ते। न च बलवदवान्तरप्रकरणेन पशुधर्माणां सवनीयार्थत्वे लब्धे तत एव नैराकाङ्क्ष्यात् कथमग्नीषोमीयार्थत्वमपीति वाच्यम्, सवनीयपशुमादाय धर्माणां नैराकाङ्क्ष्येऽपि अग्नीषोमीययागस्य प्राणिद्रव्यकतया पशुधर्मापेक्षत्वेन तदाकाङ्क्षाबलेन धर्माणामप्याकाङ्क्षोत्थापनात्। आकाङ्क्षावशाच्च दुर्बलमपि स्थानं न प्रकरणेन बाध्यत इति तदुभयार्थाः पशुधर्माः— यथा प्रकृतौ प्रत्यक्षोपदेशात्तदङ्गभावा अपि धर्माः विकृत्याकाङ्क्षया दुर्बलेनाप्यतिदेशेन तदङ्गतामपि भजन्ते तद्वत्॥

अथ सिद्धान्तयति—

## श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था॥ १८॥

तुरवधारणे। श्वस्तु औपवसथ्याहात् परेद्युरेव सुत्याहे सवनीयपशोरुत्पत्तिः, एकेषाम् अन्येषां शाखिनाम् आम्नाता— 'आश्विनं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इति। तत्र तस्मिन् उत्पन्ने सवनीयपशौ प्राक्श्रुतिः गुणार्था सुत्याहात् प्राक् पूर्वेद्युः औपवसथ्येऽहनि श्रुतम् 'आग्नेयोऽग्निष्टोम आलभ्यः' इति वाक्यं गुणविधानार्थम्। औपवसथ्येऽहनि तावत् पशुधर्मानुक्रमणसंनिधौ 'आग्नेयः सवनीयः पशुरग्निष्टोम आलभ्यते, ऐन्द्राग्न उक्थ्ये, ऐन्द्रो वृष्णिः षोडशिनि, सारस्वती मेष्यतिरात्रे' इति सवनीयान् पशूननुकीर्त्य, 'यथा वै मत्स्यो वीतो

जनमवधूनुते एवं वा एते अप्रज्ञायमाना जनमवधून्वते ' इति निन्दित्वा, एभिः कथं सवनानि पशुमन्ति भवन्ति ' इति प्रश्नमवतार्य, ' वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने सवने अङ्गैस्तृतीयसवने ' इति वपादिप्रचारविप्रकर्षो विधीयते । मत्स्यः, भीतः जले विविधं गच्छन्, अनवधारितगतिः, प्रेक्षकं जनमवधूनुते प्रेक्षणाय इतस्ततः संचालयति, एवमेते पशवः कथं प्रचरितव्या इति अप्रज्ञायमानाः प्रयोक्तारं जनं संचालयन्तीति निन्दा । वपापुरोडाशहृदयादिहविःप्रचाराणामेककालत्वस्य न्याय्यत्वात् प्रतिसवनं च प्रचारानुवृत्तेरविज्ञानात् त्रीण्यपि सवनानि कथमेतैः पशुप्रयोगवन्ति भवन्तीति प्रश्नः । तत्र पशुसंकीर्तनं प्रचारदेशविशेषाज्ञानाद्युक्तनिन्दार्थम्, निन्दा च प्रश्नावतरणार्था, प्रश्नश्च प्रचारविप्रकर्षणविध्यर्थः— इति औपवसथ्येऽहनि सवनीयपशुसंकीर्तनं गुणविधानार्थमेव, न तु सवनीयपशूनां तत्रोत्पत्तिः, येन धर्मानुक्रमणं प्रकरणप्रमाणात् तेषामपि साधारणं स्यात्; ' आश्विनं ग्रहं गृहीत्वा ' इत्यादिसुत्याहगतवाक्यादेव सवनीयपशूत्पत्तिः । ननु ' आश्विनं ग्रहं गृहीत्वा ' इत्यादिवाक्यमेव गुणविधायकमस्तु; न च प्राप्तकर्मानुवादेनानेकगुणविधौ वाक्यभेदः शङ्क्यः, 'वपया प्रातःसवने चरन्ति' इति प्रधानोत्कर्षादेव पूर्वेद्युर्विहितानामपि तदङ्गानां प्रधानकालकर्तव्यत्वादुत्कर्षे सति, तेषां प्रातःसवनेऽपि कदानुष्ठानमित्यपेक्षायाम्, आश्विनं ग्रहं गृहीत्वा परिवीय' इति परिव्याणस्य वा, 'यत् त्रिवृता यूपं परिवीयोपाकरोति, तदाश्विनं गृहीत्वा' इत्युपाकरणस्य वा, आश्विनग्रहोत्तरकालविशेषमात्रं विधीयते, परिव्याणम् उपाकरणम् द्रव्यदेवते सवनसंबन्धश्च वाक्यान्तरप्राप्ताः अनूद्यन्ते; परिव्याणोपाकरणक्रमश्च पाठप्राप्तोऽनूद्यते इति न वाक्यभेदः इति चेत्— सत्यम् । प्रकरणान्तराधिकरणे हि— अनुपादेयगुणसमभिव्याहृतवाक्य एव कर्मोत्पत्तिः, उपादेयस्य गुणस्य दूरस्थकर्मानुवादेनापि ' यदाहवनीये जुहोति' इतिवत् विधिसंभवादिति स्थितम् । तथा च औपवसथ्यगतवाक्यमेव सुत्याहेऽप्युत्पन्नं दूरस्थं कर्मानूद्य प्रचारविप्रकर्षलक्षणमुपादेयगुणं विधातुं शक्नोति । सुत्याहगतवाक्यं तु औपवसथ्योत्पन्नदूरस्थाविपरिवर्तमानं कर्मानूद्य आश्विनग्रहग्रहणोत्तरकाललक्षणमनुपादेयगुणं विधातुं प्रभवतीति तदेव सवनीयपशूत्पत्तिपरमास्थेयम् । तथा च औपवसथ्याहे पशुधर्माणां सवनीयावान्तरप्रकरणपरिग्रहाभावे सति, स्थानादग्नीषोमीयार्थत्वमेव सिध्यति ॥

स्यादेतत्— नास्त्यत्र प्रकरणान्तरन्यायः, औपवसथ्योत्पन्नस्यापि कर्मणो वपाप्रचारोत्कर्षादुत्कृष्टस्य सुत्याहे प्रातःसवने बुद्धौ विपरिवर्तमानतया असंनिधानलक्षणप्रकरणान्तराभावात्; तथा च ' संनिधौ त्वविभागात् ' इति न्यायेन ' पौर्णमास्यां पौर्णमास्या' इतिवत् संनिहितकर्मानुवादेन अनुपादेयस्याप्याश्विनग्रहग्रहणोत्तरकालस्य गुणस्य विधिः सुत्याहवाक्येऽपि किं न स्यात्— इति शङ्कामुद्भाव्य परिहरति—

## तेनोत्कृष्टस्य कालविधिरिति चेन्नैकदेशत्वात् ॥ १९ ॥

तेन वपाप्रचारेण, सुत्याहे प्रातःसवने उत्कृष्टस्य बुद्धौ विपरिवर्तमानस्यानुवादेन सुत्याहवाक्यं काललक्षणगुणविधिरस्त्विति चेत्, तन्न। कुतः। एकदेशत्वात् वपाप्रचारस्य समस्ताङ्गोपेतसवनीयपशुभावनैकदेशतया तन्मात्रोत्कर्षेण तदितराङ्गानामुत्कर्षालाभात्। तथा हि— परिव्याणस्य उपाकरणस्य वा आश्विनग्रहग्रहणोत्तरकालो विधेय इति वक्तव्यम्; तयोश्च नास्ति विपरिवृत्तिः। न च वपाप्रचारोत्कर्षेण तयोरप्युत्कर्षाद्विपरिवृत्तिः शङ्क्या, एकोत्कर्षेण हि अपरोत्कर्षो द्वेधा घटते— 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्' इत्येकादशे अङ्गानां प्रधानकालत्वस्य वक्ष्यमाणतया प्रधानोत्कर्षे अङ्गोत्कर्षाद्वा, 'तदादि वाभिसंबन्धात्तदन्तमपकर्षे स्यात्' इति पाञ्चमिकन्यायाद्वा। नाद्यः— एकादशे हि 'अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम्' इत्यत्र अनिर्ज्ञातकालानामेवाङ्गानां प्रधानकालत्वं वक्ष्यते; तदौपवसथ्येऽहनि कर्मोत्पत्तौ तत्राङ्गानां कर्तव्यत्वेन निर्ज्ञातकालतया कथं प्रधानवपाप्रचारोत्कर्षेण उपाकरणाद्युत्कर्षः। न द्वितीयः— पञ्चमे हि एकस्याङ्गस्योत्कर्षे अपकर्षे च श्रुते तदादेरुत्कर्षः तदन्तस्यापकर्षश्च स्यात्, बहुक्रमत्वात् इति सिद्धान्तयिष्यते; एवं च प्रकृते वपाप्रचारे उत्कृष्टे तदुत्तरभाविनामेव पदार्थानामुत्कर्षो भवेत्, न तु तत्पूर्वभाविनामुपाकरणादीनामपि। तस्मादुपाकरणस्य परिव्याणस्य वा प्रातःसवने विपरिवृत्त्यभावान्न तस्य सुत्यावाक्ये कालविधिरिति उत्पत्तिविधिरेवायं सवनीयपशोः। औपवसथ्यवाक्यं तु तत्र गुणविधिरिति सवनीयपशोस्तदानीमनुष्ठानाभावान्न तदर्थत्वं पशुधर्माणाम्॥

स्यादेतत्— औपवसथ्येऽहन्युत्पन्नस्य सवनीयपशोस्तदानीमेव स्वाङ्गसहितानुष्ठाने प्राप्ते सुत्याहे प्रातःसवने वपाप्रचाराद्युत्कर्षो विहितः। तत्र यदि वपाप्रचाराद्येव सुत्याहे अनुष्ठीयेत, तत्पूर्वभाविनश्च पदार्थाः पूर्वेद्युरनुष्ठीयेरन्, तर्हि वपोद्धरणादिकर्मापि पूर्वेद्युरेवानुष्ठेयं स्यात्। तथा सति 'मुष्टिना शमिता वपोद्धरणमपिधायास्ते आ वपाया होमात्' इति विरुध्येत। न हि कश्चिद्वपोद्धरणच्छिद्रप्रदेशं मुष्टिना पूर्वेद्युरारभ्य परेद्युर्वपाहोमपर्यन्तमपिदधत् उपवेष्टुं शक्नुयात्, मध्ये आहारादिकर्मणामवर्जनीयत्वात्। ततश्च वपाप्रचाराद्युत्कर्षेण तत्पूर्वपदार्थानामपि सुत्याहे उत्कर्षे सति परिव्याणस्योपाकरणस्य वा तदानीं विपरिवृत्तिसत्त्वात् तत्राश्विनग्रहणोत्तरकालविधिः संभवतीति औपवसथ्येऽहनि उत्पन्नस्य सवनीयस्य प्रकरणसत्त्वात्तदानीमाम्नाताः पशुधर्माः सवनीयपशोरपि भवन्ति इत्याशङ्क्य, परिहरति—

## अर्थेनेति चेन्न श्रुत्यविप्रतिषेधात्॥ २०॥

अर्थेन 'मुष्टिना शमिता' इति विहितकार्येण अनुपपद्यमानेन परेद्युः परिव्याणादिपदार्थानामपि प्रागामुत्कर्षो भवत्विति चेन्न; कुतः, श्रुत्यविप्रतिषेधात्— औपवसथ्येऽहन्युत्पत्तिपक्षे वपाप्रचाराद्येव सुत्याहे उत्कृष्यताम्; तत्पूर्वपदार्थास्तु पूर्वेद्युरेवानुष्ठीयन्ताम्; अथापि 'मुष्टिना

शमिता' इति श्रुतिः न विप्रतिषिध्यते। तत्र हि आसधातुरौदासीन्ये वर्तते— यथा 'क्षेत्राणि परिगृह्यास्ते' इति कर्षणादिकर्मणि उदास्त इति गम्यते; मुष्टिनेति च तृणपर्णादिमुष्टिरुच्यते; तथा च शमिता तृणपर्णादिमुष्टिना वपोद्धरणप्रदेशमपिधाय वपाहोमपर्यन्तं विशसनकर्मणि उदास्ते, न व्याप्रियत इत्यर्थः। ततश्च वपाप्रचारतः पूर्वपदार्थानां पूर्वेद्युरनुष्ठानेऽपि नानुपपत्तिः। तदेवं सवनीयपशोरौपवसथ्येऽहन्युत्पत्तिनिरासेन पशुधर्माणां तदवान्तरप्रकरणपरिग्रहाभावे सति स्थानप्रमाणबलादग्नीषोमीयपशुमात्रार्थत्वमिति सिद्धान्तं निगमयन् प्रथमपक्षं निरस्यति—

## स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २१ ॥

तुरवधारणे। उक्तरीत्या पशुधर्माणां सवनीयपशुप्रकरणपरिग्रहाभावात् स्थानप्रमाणेन निःसपत्नेन पूर्वस्य अग्नीषोमीयपशोरेवैते धर्मा भवेयुः। ननु मास्तु पशुधर्माणामवान्तरप्रकरणपरिग्रहः; ज्योतिष्टौमिकमहाप्रकरणपरिग्रहस्तु स्यादेव; ततश्च ज्योतिष्टोमार्थतया विज्ञायमानाः पशुधर्माः आनर्थक्यतदङ्गन्यायेन त्रिष्वपि पशुषु निविशेरन्नित्यत आह— संस्कारस्य तदर्थत्वादिति। संस्कारस्य नियोजनादिधर्मजातानुक्रमणस्य अग्नीषोमीयमात्रार्थत्वात्। तथा हि नियोजनोपाकरणसंज्ञपनादिपशुधर्माणामयोग्यत्वान्न ज्योतिष्टोमीयमहाप्रकरणपरिग्रहः। न चानर्थक्यतदङ्गन्यायोऽत्रावतरति। तत्र हि प्रथमप्रवृत्तवाजपेयिकमहाप्रकरणम् सप्तदशारत्नित्वस्यायोग्यतां दृष्ट्वा ततो झटिति परावृत्य तदाम्नानानर्थक्यं पर्यालोच्य पुनरभिमुखीभूय, वाजपेयाङ्गपशुगतयूपद्वारा सप्तदशारत्नित्वं परिगृह्णातीत्यगत्या स्वीक्रियते। इह तु नियोजनादिधर्मतः परावृत्तेऽपि महाप्रकरणे स्थानादग्नीषोमीयार्थतया धर्माम्नानस्यार्थवत्त्वोपपत्तेर्नागतिकत्वमित्यग्नीषोमीयार्थमेव धर्माम्नानम्। तदयमत्र निष्कर्षः— सोमक्रयसंनिधावग्नीषोमीयः पशुरुत्पन्नः। स च चोदकतो दार्शिकाङ्गैः शान्तकथंभावाकाङ्क्षः औपवसथ्येऽहनि वचनादुत्कृष्टः सन् तत्राम्नातैः पशुधर्मैः उपकार्यमपेक्षमाणैः पुनरुत्थापितकथंभावाकाङ्क्षः तैः संबध्यते। तथा चाग्नीषोमीयः पशुः सर्वेषां पशूनां प्रकृतिः। सवनीयपशुस्तु सुत्याहे आश्विनग्रहग्रहणोत्तरकालकपरिव्याणादिसहितो विधीयते। तत्र परिव्याणादिकं प्रकृतितः प्राप्तमनूद्यते। प्राप्ताप्राप्तविवेकेनाश्विनग्रहणोत्तरकालादिविशिष्टो विधेयः। विशिष्टविधानाच्च न वाक्यभेदः। औपवसथ्येऽहनि सवनीयपशुवाक्यं तु प्रचारविप्रकर्षविधानार्थम्। अनूबन्ध्यायामपि चोदकतोऽग्नीषोमीयादेव धर्मा भवन्ति इति।

इतोऽपि अग्नीषोमीयार्थमेव धर्माम्नानमित्याह—

## लिङ्गदर्शनाच्च ॥ २२ ॥

'पुरोडाशेन माध्यंन्दिने सवने' इति सवनीयपशौ पुरोडाशभागोऽनूद्यते। स चाग्नी-

षोमीयात् प्राप्यते : अग्नीषोमीयपशौ च 'अग्नीषोमाभ्यां पुरोडाशस्यानु ब्रूहि' इत्यादयोऽग्नीषोमीयलिङ्गका मन्त्रा आम्नाताः । पशुपुरोडाशश्च पशुदेवतासंस्कारार्थः, 'अवीवृधेतां पुरोडाशेन' इति मन्त्रलिङ्गात्, 'तेन पशुदेवता वर्धते' इति वाक्यशेषाच्च । अग्नीषोममन्त्रवानयं पुरोडाशयागश्च न सवनीयदेवतां संस्कर्तुं शक्नोति । न चोहेन तत्संभवः, पशुधर्मोपदेशस्य ज्योतिष्टौमिकसर्वपशुसाधारणत्वे सवनीयपशोरपि प्रकृतित्वात्, प्रकृतौ चोहाभावस्य दशमे वक्ष्यमाणत्वात् । पशुधर्मोपदेशस्याग्नीषोमीयमात्रार्थत्वे तु सवनीयपशोस्तद्विकृतित्वात् ऊहेन सवनीयपशुदेवतासंस्कारकत्वं संभवतीति तत्र पशुपुरोडाशदर्शनं न विरुध्यते । तस्मादग्नीषोमीयपशुमात्रार्थो धर्मोपदेशः ।

ननु पशुदेवतार्थत्वं पुरोडाशस्य न साक्षात्; किं तु पशुसंस्कारद्वारैव; एवं हि श्रूयते— 'सुषिरो वा एतर्हि पशुर्यर्हि वपामुत्खिदति यद्व्रीहिमयः पुरोडाशो भवत्यपिधानायासुषिराय' इति पुरोडाशयागसंस्कृतपशुहविःसंबन्धात् पशुदेवता वर्धत इत्युपपद्यते; छिद्रापिधानात्मकपशुसंस्कारश्चायमग्नीषोममन्त्रवतापि पुरोडाशयागेन संपद्यत इति पशुधर्माम्नानस्य पशुत्रयार्थत्वेऽपि न विरोध इत्यत आह—

## अचोदना वा गुणार्थेन ॥ २३ ॥

पुरोडाशयागस्य पशुच्छिद्रापिधानार्थत्वं प्रत्यक्षपराहतम्; अतोऽर्थवादमात्रमेतत् । ततश्च गुणार्थेन छिद्रापिधानलक्षणगुणविधानप्रयोजनाय पुरोडाशस्य अचोदना विधिर्नास्ति । अतः साक्षात् पशुदेवतार्थ एव पुरोडाशयागः; पशुदेवतार्थत्वं च न केवलमदृष्टविधया, किं तु पुरोडाशयागीयमन्त्रतः प्रकाशनद्वारैव, यथाकथमपि दृष्टलाभे केवलादृष्टार्थत्वाश्रयणायोगात् । तदीयमन्त्रतः सवनीयदेवताप्रकाशनं च ऊहेनैव भवति। स च सवनीयपशोः प्रकृतित्वे सति न संभवति। अतः पशुधर्माम्नानमग्नीषोमीयपशुमात्रार्थमिति विज्ञायते । प्रयोजनम्— पूर्वपक्षे 'यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाशः' इत्याग्नेयपशुसमानदेवताके सवनीयपुरोडाशे अग्नीषोमलिङ्गकमन्त्राणां निवृत्तिः, प्रकृतावूहाभावात्, धर्मोपदेशस्य पशुत्रयसाधारणत्वे सवनीयपशोरपि प्रकृतित्वात्; तथा अनूबन्ध्यायां वशायाम् 'प्रास्मा अग्निं भरत' इत्यादिपुंलिङ्गमन्त्राणां निवृत्तिः । सिद्धान्ते तु धर्मोपदेशस्याग्नीषोममात्रार्थतया सवनीयानूबन्ध्ययोस्तद्विकृतित्वादूहसंभव इति ॥ वृत्तमधिकरणम् ॥

दर्शे तावत् 'ऐन्द्रं दध्यमावास्यायाम्' 'ऐन्द्रं पयोऽमावास्यायाम्' इति स्तो दधिपयोयागौ । तत्र पूर्वेद्युः सायं पयो दुग्ध्वा अपायित्वा आतञ्च्य दधि क्रियते; परेद्युस्तु प्रातः पयो

८. शाखाहरणादीनामुभयदोहधर्मताधिकरणम् । दुग्ध्वा केवलं श्रप्यते, तदिदं शृतशब्देन याज्ञिका व्यवहरन्ति । तत्र पूर्वेद्युः शाखाहरणवत्सापाकरणादयः पदार्थाः समाम्नाताः । ते किं दधिधर्माः उतोभयधर्मा इति संशये पूर्वपक्षयति—

## दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ २४ ॥

दुह्येते इति दोहौ, दधिपयसी ; तयोर्मध्ये शृतं पयः शाखाहरणादिधर्मैरसंयुक्तं स्यात् । कुतः । कालभेदात्, पूर्वेद्युः सायं दधि क्रियते; परेद्युस्तु प्रातः पयः ; ततश्च दध्न एवानुष्ठानसादेश्यलक्षणसंनिधिरस्ति ; दधिकरणस्य पूर्वेद्युर्विहितत्वेन तस्य पूर्वेद्युरेवेतिकर्तव्यताकाङ्क्षासत्त्वात् अवान्तरप्रकरणं च विद्यते ; एवं च संनिधिप्रकरणाभ्यां दध्न एव एते धर्मा इति प्राप्ते, सिद्धान्तयति—

## प्रकरणाविशेषाद्वा तत्संयुक्तस्य कालशास्त्रम् ॥ २५ ॥

वा शब्द एवार्थे । उभयधर्मा एवैते शाखाहरणादयः । कुतः । प्रकरणाविशेषात् । दर्शपूर्णमासयोर्हि प्रकरणे शाखाहरणादयो धर्मा आम्नाताः । ते च योग्यतया लिङ्गेन दधिपयोयागमात्रधर्माः संपद्यन्ते, न तु संनिधिवशाद्दधिमात्रधर्माः, संनिध्यपेक्षया प्रकरणस्य बलीयस्त्वात् । न च दधियागस्यावान्तरप्रकरणमस्ति, शाखाहरणादिधर्माणां दधियागसंदंशाभावात् । न हि शाखाहरणादिधर्मानुक्रमणस्य पुरस्तात्परस्ताच्च दधियागश्रवणमस्ति, येन संदंशे सति 'संदष्टं तदङ्गमितरत्पुनः' इति न्यायादवान्तरप्रकरणमुन्मिषेत । नापि दधियागस्य पूर्वेद्युः स्थानमस्ति, परेद्युरेव तदनुष्ठानात् । ततश्च दधियागासंयुक्तस्य शाखाहरणादिधर्मजातस्यानुष्ठाने पूर्वेद्युःकालविधायकं शास्त्रं वर्तत इति कृत्वा तत्रानुष्ठानम् ; न तु तावता दधिमात्रार्थता; तस्मादुभयधर्माः । प्रयोजनं पूर्वपक्षे दधिनिष्पत्त्यनन्तरं शाखानाशे प्रातर्दोहार्थं न शाखान्तरमुत्पाद्यम् ; उपायान्तरेण वत्सापाकरणादि कर्तव्यम् ; सिद्धान्ते तु शाखान्तरमुत्पाद्यम् ॥ वृत्तमधिकरणम् ॥

ज्योतिष्टोमे प्रातःसवने ग्रहधर्माः समाम्नाताः— 'ग्रहं संमार्ष्टि' 'गृहीत्वा खरे सादयति' इत्यादयः । ते किं प्रातःसवनिकग्रहार्थाः, उत सवनान्तरग्रहार्था अपीति संशयः ।

९. सदनादीनां सवनत्रयधर्मताधिकरणम् । ऐन्द्रवायवादिग्रहयज्ञ्याभ्यासानां प्रातःसवनेऽनुष्ठानात् उत्पत्तेश्च अनुष्ठानसादेश्यलक्षणं स्थानमवान्तरप्रकरणं वास्तीति प्रातःसवनिकग्रहार्थमेव धर्माम्नानमिति प्राप्ते, सिद्धान्तयति—

## तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ २६ ॥

प्रातःसवनादन्यत्र माध्यन्दिनतृतीयसवनयोरपि यत् ग्रहाम्नानं तदपि, तद्वत् शृतवत्, धर्मग्राहकम्, महाप्रकरणात् स्थानस्य च तदपेक्षया दुर्बलत्वात् । अवान्तरप्रकरणं तु प्रातःसवनशब्दसंदंशाभावान्नास्ति । अतो महाप्रकरणात् सर्वग्रहार्थं धर्माम्नानम् ॥ वृत्तमधिकरणम् ॥

सोमपशुधर्मानुक्रमणे 'यूपं परिव्ययति' इति प्रकृत्य रशनाधर्माः श्रुताः— 'त्रिगुणा

भवति' 'दर्भमयी भवति' 'रशनया मध्यभागेन यूपं परिवीयाद्यन्तभागौ प्रवेष्ट्याग्रे मूलं प्रवेश-
१०. रशनात्रिवृत्त्वादीनां सवनीयपशुधर्मताधिकरणम् ।
यति' इत्यादयः । ते तावत् अग्नीषोमीयपरिव्याणरशनार्थाः सवनीयपरिव्याणरशनायां चोदकतः प्राप्नुवन्तीत्यनुपदमेव स्थितम् । अस्ति च सवनीयपशौ अपूर्वं परिव्याणान्तरम्— 'स आश्विनं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति' इति । अत्र हि चोदकप्राप्तपरिव्याणे आश्विनग्रहग्रहणोत्तरकालो न विधीयते, 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इति सवनीयोत्पत्तिवाक्यादेव तत्प्राप्तेः । किं तु परिव्याणान्तरमेव यूपस्य संस्कारान्तरार्थमप्राकृतकार्यं कालविशिष्टं विधीयते, उपनिष्क्रमणं त्वर्थप्राप्तत्वान्न विधेयम् । तदेवंविधरशनासाधारणमपि त्रिगुणत्वादिधर्माम्नानम्, उताग्नीषोमीयरशनामात्रार्थमिति संशयः । तत्र रशनाधर्माणां परिव्याणस्वरूपार्थत्वे आनर्थक्यापत्त्या क्रत्वपूर्वानुप्रवेशावश्यंभावे सति स्थानादग्नीषोमीयपरिव्याणरशनार्थमेव तदाम्नानम् । तथा च त्रिगुणत्वादयो रशनाधर्माः सवनीयपशौ चोदकप्राप्तपरिव्याणरशनायामेव प्राप्नुवन्ति, नैतदपूर्वपरिव्याणरशनायामिति प्राप्ते, सिद्धान्तयति—

## रशना च लिङ्गदर्शनात् ॥ २७ ॥

सवनीयपशौ अपूर्वपरिव्याणरशनापि रशनाधर्मोपदेशेन गृह्यते; तत्साधारणतया रशनाधर्मा उपदिश्यन्त इति यावत् । कुतः ? लिङ्गदर्शनात्— दृश्यते निश्चीयते संदिग्धोऽर्थोऽनेनेति दर्शनम्, न्यायः; लिङ्गं च दर्शनं चेति समाहारद्वन्द्वः; लिङ्गात् न्यायाच्चेत्यर्थः । 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय' इति सवनीयोत्पत्तिवाक्ये प्राकृतापूर्वसाधारणसवनीयपरिव्याणरशनायां त्रिगुणत्वानुवादो दृश्यते । रशनाधर्माणामग्नीषोमीयपरिव्याणरशनामात्रार्थत्वे तु नोपपद्येत, सवनीयपशुगतापूर्वपरिव्याणरशनायां त्रिगुणत्वस्य चोदकतोऽप्राप्तत्वेन तदनुवादायोगात् । अतो लिङ्गादपि तद्रशनासाधारण्यं धर्माणाम् । न्यायाच्च— यूपं परिव्ययति इति हि द्वितीयाश्रुत्या परिव्याणं यूपार्थम्; तत्प्रणाड्या यूपार्थता रशनाधर्माः प्रतिपद्यन्ते; तत्र रशनाधर्माणां परिव्याणस्वरूपे आनर्थक्यात् क्रत्वपूर्वानुप्रवेशावश्यंभावे सति अग्नीषोमीयार्थयूपार्थत्वेन परिव्याणं न विशेषणीयम्; किं तु अग्नीषोमीयसंबन्धियूपसंबन्धित्वमात्रेण, लाघवात्; तावतैवानर्थक्यपरिहारात्, अग्नीषोमीयसंनिधेरपि तावतैवोपपत्तेः; अन्यथा रशनाद्वयसाधारण्येन प्रवृत्तधर्मश्रुतिसंकोचापत्तेः । न च सवनीयपरिव्याणस्य सवनीययूपसंबन्धित्वेऽपि अग्नीषोमीययूपसंबन्धित्वाभावान्न तत्साधारण्यमिति वाच्यम्; एकादशे हि यूपस्य सौमिकपशुत्रयसाधारण्यं व्यवस्थापयिष्यते 'यूपश्चाकर्मकालत्वात्' इत्यत्र; अतः सवनीयपरिव्याणमप्येतदग्नीषोमीयसंबन्धियूपसंबन्धीत्यदोषः । तस्मादुभयरशनार्थं धर्माम्नानम् ॥ वृत्तमधिकरणम् ॥

ज्योतिष्टोमे 'ग्रहं संमार्ष्टि' इत्यादयो ग्रहधर्माः अंश्वदाभ्ययोर्भवति न वेति संशये, पूर्वपक्षयति—

## आराच्छिष्टमसंयुक्तमितरैः संनिधानात् ॥ २८ ॥

आरात् दूरे शिष्टं विहितम्, अनारभ्यविहितमिति यावत्; तथाविधमिदं ग्रहधर्मैरसंयुक्तं प्रत्येतव्यम्। कुतः ? इतरैः संनिधानात्। प्रकरणपठितैः ग्रहैः ग्रहधर्माणां संनिधानात्।

११. अंश्वदाभ्ययोरपि सदनादिधर्मवत्त्वाधिकरणम्।

असंनिधानादिति पाठे आराच्छिष्टम् अनारभ्यविहितम् ग्रहद्वयम् इतरैः प्रकरणपठितैः ग्रहधर्मैः असंयुक्तं प्रत्येतव्यम्, ग्रहद्वयस्य धर्मैस्त्रिभ्यसंनिधेरिति योजना। प्रकरणात् सोमग्रहेषु निविशमाना ग्रहधर्माः प्रकरणपठितेषु संनिहितेष्वेव निवेशं लब्ध्वा अनारभ्यविहिते व्यवहिते ग्रहद्वयेऽस्मिन न प्रवर्तन्त इति यावत् ॥

अथ सिद्धान्तयति—

## संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ २९ ॥

वा शब्दोऽवधारणे। ग्रहद्वयमिदं ग्रहधर्मैः संयुक्तमेव प्रत्येतव्यम्। कुतः ? शेषस्य संमार्गादिधर्मस्य तन्निमित्तत्वात् ग्रहप्रयुक्तत्वात्। अविशेषप्रवृत्तग्रहशब्दघटितवाक्यप्रमाणेन सर्वग्रहार्थत्वादिति यावत्। प्रकरणबलात् ग्रहधर्माणां प्राकरणिकग्रहमात्रार्थत्वं वदतः किमवान्तरप्रकरणं विवक्षितम्, महाप्रकरणं वा, नाद्यः, ऐन्द्रवायवादिग्रहविधीनां प्रातिस्विकशब्दसंदंशाभावात्; न द्वितीयः— महाप्रकरणेन प्राकरणिकग्रहार्थत्वं वदता हि 'ज्योतिष्टोमप्रकरणगतान् ग्रहान् संमृज्यात्' इत्येवं प्रकरणस्य धर्मविधिविशेषणत्वं वक्तव्यम्, तद्विना अनारभ्याधीतव्यावृत्त्यसिद्धेः; न च तत्संभवति, विनियोजकमात्रप्रमाणस्य प्रकरणस्य विशेषकत्वानुपपत्तेः। नन्वेवं सति ग्रहधर्मोपदेशस्य कर्मान्तरीयसुरादिग्रहसाधारण्यं स्यादित्यत आह— तदर्थत्वादिति। प्रकरणस्य स्वतो विशेषकत्वाभावेऽपि धर्मविधिषु उद्देश्यग्रहशब्दार्थस्य ज्योतिष्टोमापूर्वसाधनस्वरूपप्रत्यायनार्थतया तद्द्वारा विशेषकत्वसंभवादित्यर्थः। न चैवमपि संनिधेर्विशेषकत्वात् संनिहितग्रहमात्रार्थत्वं धर्माणामिति वाच्यम्, अपूर्वसाधननिवेशनमात्रेण धर्माणामर्थवत्त्वोपपत्त्या पुनः संनिधिना विशेषणस्यानाकाङ्क्षितत्वात्, अनारभ्याधीतग्रहद्वयस्य उत्पत्तितो धर्मविधिसंनिध्यभावेऽपि तस्य प्रकृत्यर्थत्वन्यायेन ज्योतिष्टोमगामिनोऽनुष्ठानसादेश्यलक्षणसंनिधेः सत्त्वाच्च। तस्मात् ज्योतिष्टोमीयसर्वग्रहार्था धर्माः नन्वेवं सति 'मैत्रावरुणं पयसा श्रीणाति' इत्यपि सर्वग्रहार्थं स्यात्—श्रीणातीति मिश्रणमुच्यते— इति मन्दशङ्कां निराकरोति—

## निर्देशाद्व्यवतिष्ठेत ॥ ३० ॥

'मैत्रावरुणम्' इति विशिष्य निर्देशात् तत्रैव श्रयणं निविशेत; न तु महाप्रकरणमनुसृत्य प्रहान्तराण्यपि संक्रामति, प्रकरणाद्वाक्यस्य बलीयस्त्वात्। ततश्च श्रयणस्य प्राकरणिकसर्वार्थत्वबाधेन वाक्याद्व्यवस्था। इह तु प्राकरणिकव्यवस्थाभावेन वाक्यात्सर्वार्थता ॥ वृत्तमधिकरणम् ॥

अग्निचयनप्रकरणे 'प्राणभृत उपदधाति' इत्याद्याः काश्चिदिष्टकाः सन्ति। 'चित्रिणीरुपदधाति' इत्याद्या अनारभ्यविहिताश्च। इष्टकाधर्माश्चाग्निप्रकरणे समाम्नाताः, 'न खण्डामुपदध्यात्' 'न कृष्णामुपदध्यात्' इत्यादयः। ते तावदनारभ्यविहिता-
१२. चित्रिण्यादीष्टकानामग्न्यङ्गताधिकरणम्।
स्विष्टकासु प्रवर्तन्ते न वेति संशयः। तत्र अंश्वदाभ्ययोरनारभ्यविहितयोरपि 'यस्यैवं विदुषोऽंशुर्गृह्यते' 'यस्यैवं विदुषोऽदाभ्यो गृह्यते' इति प्राकरणिकवाक्यद्वयेन विनियोगोऽस्ति। ततश्च प्रकरणसंस्पर्शाद्युक्तः तयोर्धर्मसंबन्धः। चित्रिण्यादीनामनारभ्यविहितानां 'यां कांचन ब्राह्मणवतीमिष्टकामभिजानीयात्, तां मध्यमायां चित्यामुपदध्यात्' इत्यनारभ्यवादेनैव विनियोगोऽवगतः, ब्राह्मणवतीरित्यनारभ्याविहिता उच्यन्ते; ततश्च चित्रिण्यादीनां प्रकरणसंस्पर्शाभावान्न धर्मसंबन्ध इति प्राप्ते, सिद्धान्तयति --

## अग्न्यङ्गमप्रकरणे तद्वत् ॥ ३१ ॥

अप्रकरणे यदग्न्यङ्गं चित्रिण्यादि, तदपि अंश्वदाभ्यवत् धर्मयुक्तं स्यात्; प्रकरणसंस्पर्शाभावेऽपि साग्निचित्यकत्वपूर्वसंस्पर्शात् तत्साधननिवेशिन इष्टकाधर्माश्चित्रिण्यादीनामपि भवन्ति ॥ वृत्तमधिकरणम् ॥

'यदि राजन्यं वैश्यं वा याजयेत्' इत्यादिवाक्ये सोमप्रत्याम्नायत्वेन फलचमसविधिरिति स्थितं पूर्वस्मिन्पादे। तत्र 'सोममभिषुणोति' इत्यादिधर्मोपदेशः किं सोमफलचमससाधा-
१३. अभिषवादीनां सोममात्रधर्मताधिकरणम्।
रणः, उत सोममात्रविषय इति संशयः। उभयसाधारण इति ब्रूमः। अभिषवादिविधिषु हि सोमशब्दो ज्योतिष्टोमापूर्वसाधनत्वरूपेणैव सोमं माचष्टे, न तु तद्विशिष्टसोमत्वेन, अन्यथा 'व्रीहीनवहन्ति' इत्यादीनां यवेष्वप्रवृत्तिप्रसङ्गात्। एवं च फलचमसस्यापि क्रत्वपूर्वसाधनत्वाविशेषात् तत्साधारण्यमभिषवादिधर्माणामिति प्राप्ते, सिद्धान्तयति--

## नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ ३२ ॥

राजन्यत्वादिनिमित्ते विहितं फलचमसद्रव्यम् असमानविधानं स्यात्— समानं

साधारणं धर्माम्नानं यस्य तत् समानविधानम्; अभिषवादिधर्मोपदेशः सोममात्रविषयः, न तु फलचमससाधारण इति यावत्। कुतः? अतुल्यत्वात् फलचमसद्रव्यस्य कादाचित्कतया नित्यैरभिषवादिधर्मैः अतुल्यत्वात्; नित्यानित्यसंयोगविरोधादिति यावत्। यद्यपि व्रीहियवद्रव्ययोरपि प्रयोगभेदादनित्यत्वम्, तथापि तत्रागत्या अनित्ययोरपि तयोर्नित्यधर्मसंबन्धो युज्यते; इह तु प्रयोगतोऽपि नित्यस्य सोमद्रव्यस्य नित्याभिषवादिधर्माणां च अन्वयसंभवात् अनित्यफलचमसान्वयो न युज्यते; किं च शाब्दमेव नित्यत्वं धर्मान्वये प्रयोजकम्, न तु प्रयोगतः; ततश्च व्रीहियवद्रव्ययोः प्रयोगतः पाक्षिकत्वेऽपि शब्दतो नित्यत्वाच्च नित्यधर्मान्वयाविरोधः, फलचमसस्य तु 'यदि राजन्यम्' इति यद्युपबन्धादनित्यत्वात् न नित्याभिषवादिधर्मसंबन्धः। न हि अभिषवादिधर्मेण नित्येन ज्योतिष्टोमस्योपकुर्यात् अनित्यफलचमसद्वारेणेति युज्यते; नापि नित्यमभिषवादिधर्मसंस्कृतफलचमसेन क्रतोरुपकुर्यादिति, तथा सति फलचमसस्यापि नित्यत्वप्रसङ्गात्; नापि अभिषवसंस्कृतेन फलचमसेन राजन्यत्वादिनिमित्ते सति क्रतोरुपकुर्यादिति संगच्छते, अभिषवादिधर्माणामप्यनित्यत्वप्रसङ्गात्। अतो नित्यानित्यसंयोगविरोधाच्च फलचमससाधारण्यमभिषवादिधर्माम्नानस्य। नन्वपूर्वसाधनत्वरूपेणैव फलचमसस्य धर्मान्वयः; ततश्च अपूर्वसाधनत्वस्य ब्राह्मणयजमानकप्रयोगे सोमद्रव्यमाश्रित्य राजन्यादिप्रयोगे फलचमसद्रव्यमाश्रित्य च नित्यतयैव सर्वत्र प्रयोगेषु सद्भावाच्च नित्यानित्यसंयोगविरोधः इति चेत्—सत्यम्; नित्यं नैमित्तिकं च द्रव्यं न युगपद्विधीयते, किं तु नित्यं विधाय नैमित्तिकं विधीयत इत्यनुपदमेव निरूपितम्—'नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्' इत्यत्र; ततश्च नित्यसोमद्रव्यशास्त्रप्रवृत्तिवेलायां नैमित्तिकफलचमसद्रव्यशास्त्रस्य प्रवृत्त्यभावेन फलचमसद्रव्यगतापूर्वसाधनत्वानवगत्या सोमपदेन सोमद्रव्यगतापूर्वसाधनत्वस्यैव लक्षणयोपस्थितेः तद्विशेषणतया तस्यां दशायामभिषवादिधर्मविषयः स्वार्थान्विधाय निवृत्ताः पश्चात् नैमित्तिकद्रव्यशास्त्रप्रवृत्त्यनन्तरं नैमित्तिकद्रव्यगतापूर्वसाधनत्वानवगतौ न तद्विशेषणतयापि स्वार्थान्विधातुं शक्नुवन्ति, आवृत्तिप्रसङ्गात्। व्रीहियवशास्त्रयोः पाठक्रमसत्त्वेऽपि तयोर्द्रव्ययोर्युगपदेव धर्मप्रवृत्तिरेकादशे वक्ष्यत इति न विरोधः। प्रयोजनं पूर्वपक्षे 'सोमं ते क्रीणामि' इत्यादिमन्त्राणां फलचमसद्रव्ये निवृत्तिः, प्रकृतावूहाभावात्; गुणकामानां प्रवृत्तिश्च; सिद्धान्ते तु तद्विपर्यय इति ॥ वृत्तमधिकरणम् ॥

नित्यकर्मणि आरब्धे च काम्यकर्मणि श्रुतद्रव्यालाभे प्रतिनिधिरुपादातव्य इति षष्ठे वक्ष्यते। तत्रावघातधर्मोपदेशः किं श्रुतप्रतिनिधिसाधारणः, उत श्रुतमात्रविषय इति संशये, पूर्वपक्षयति—

## प्रतिनिधिश्च तद्वत् ॥ ३३ ॥

प्रतिनिधिरपि फलचमसवदसमानविधान इत्यर्थः; प्रतिनिधिद्रव्यस्य श्रुतद्रव्यालाभनि-

१४. प्रतिनिधिष्वपि मुख्य-धर्मानुष्ठानाधिकरणम्। मित्तकतया अनित्यत्वेन तत्र नित्यवदाम्नातधर्माणां संबन्धाभावात्; श्रुतद्रव्यविकारत्वाभावातिदेशत एव तत्र धर्मप्राप्तिरिति यावत् ॥

अथ सिद्धान्तयति—

## तद्वत्प्रयोजनैकत्वात् ॥ ३४ ॥

न प्रतिनिधिरसमानविधानः; किं तु तद्वत् श्रुतद्रव्यवत् धर्मोपदेशं लभेत । कुतः? प्रयोजनैकत्वात्— येन शब्देन व्रीह्यादिद्रव्यमनूद्यावहननादिधर्माः प्रयुज्यैन्ते विधीयन्ते, तस्य व्रीह्यादिशब्दस्य एकत्वात् प्रतिनिधेयनीवारादिसाधारणत्वात् । 'व्रीहिभिर्यजेत' इत्यत्र हि व्रीहिशब्दः आकृत्यधिकरणन्यायेन जातिवचनः, तत्र जातेः साक्षाद्यागसाधनत्वासंभवात् व्यक्तिद्वारा यागसाधनत्वं वाच्यम्; तदपि न संभवति, यागदशायामवहननपेषणादिना व्यक्तीनां विनष्टत्वात्; अतो व्रीह्यवयवानामेव यागसाधनत्वे व्रीहिशास्त्रस्य तात्पर्यं वाच्यम्; तत्र व्रीहिषु व्रीह्यवयवा बहुलाः सन्ति; नीवारेषु तु व्रीह्यवयवा नीवारावयवमिश्रा अल्पाः सन्ति; तत्र यदि व्रीहयो न लभ्यन्ते तदा व्रीहिशास्त्रानुग्रहाय नीवारगता अल्पा अपि व्रीह्यवयवा ग्राह्याः, तत्र नीवाराणामुपादानं विना तद्गतव्रीह्यवयवानामुपादानासंभवान्नान्तरीयकतयैव तदुपादानम्; तच्च व्रीह्यवयवबुद्ध्यैव, न तु नीवारबुद्ध्या— इति षष्ठे वक्ष्यते 'सामान्यं तच्चिकीर्षा हि' इत्यत्र । तथा च व्रीहिगतानामिव नीवारगतानामपि व्रीह्यवयवानां व्रीहिशास्त्रतात्पर्यविषयीभूतत्वाद्धर्मोपदेशः श्रुतप्रतिनिधिद्रव्यसाधारणः ॥

नन्वेवमपि व्रीहिगता एव तदवयवाः प्रथमावगताः; नीवारगतास्तु मुख्यद्रव्यालाभेऽपि कर्मणामवश्यकर्तव्यतया आक्षिप्ताः पश्चादवगताः; ततश्च फलचमसन्यायेनात्रापि सामानविध्यं न संभवतीत्याह—

## अशास्त्रलक्षणत्वाच्च ॥ ३५ ॥

व्रीह्यवयवानां व्रीहिगतत्वरूपेण यागसाधनताया व्रीहिशास्त्रतात्पर्यविषयत्वाभावादित्यर्थः । अवघातपेषणादिना व्रीहिस्वरूपस्य विनष्टत्वेन यागनिष्पत्तिदशायामवयवानां व्रीहिगतत्वाभावेन व्रीहिशास्त्रस्य व्रीहिगतत्वविशिष्टावयवेषु तात्पर्यासंभवात् व्रीहिजननयोग्यावयवमात्रे तात्पर्यं वक्तव्यम् । ततश्च व्रीहिजननयोग्यत्वरूपेण तदवयवानां व्रीहिषु नीवारेषु च व्रीहिशास्त्रात् युगपदेव यागसाधनत्वमवगतम्, प्रवृत्तिनिमित्तस्य साधारणत्वात् । एवं च व्रीहिशास्त्रानुसारेण 'व्रीहीनवहन्ति' इत्यादिवाक्यगतस्यापि व्रीहिशब्दस्य व्रीहिजननयोग्यावयवमात्रपरत्वं न्याय्यम्, न तु व्रीहिगतत्वरूपेण— इति सिद्धं प्रतिनिधीनामपि श्रुतद्रव्यसामानविध्यम् । ननु व्रीहिशास्त्रस्य

व्रीहिजननयोग्यावयवपरत्वे व्रीहीणामिव नीवाराणामपि मुख्यत्वमेव स्यात्, न तु प्रतिनिधित्वमित्यत आह—चेति अनुक्तसमुच्चये । व्रीहिषु व्रीहिजननयोग्यावयवा बहुलाः सन्ति; नीवारेषु त्वल्पाः ; प्रवृत्तेश्चैष स्वभावः—यत् बहुलावयवेषु सत्सु अल्पावयवेषु न प्रसरतीति । तत्सिद्धं प्रतिनिधीनां श्रुतद्रव्यसामानविध्यम् । प्रयोजनं पूर्वपक्षे प्रकृतौ 'व्रीहीणां मेध' इत्यादिमन्त्राणां नीवारादिशब्दविकारेण प्रवृत्तिः ; सिद्धान्ते तु अविकारेण तत्प्रवृत्तिरिति ॥ वृत्तमधिकरणम् ॥

'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इत्यत्र पूतीकानामोषधिविशेषाणामभिषवादिधर्मोपदेशग्राहित्वलक्षणं सामानविध्यमस्ति, न वेति संशयः । तत्र व्रीह्यलाभे निमित्ते सति

१५. श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ।

नीवारशब्देन नीवाराणां विध्यभावात् व्रीहिबुद्ध्यैव उपादानात् व्रीहिसामानविध्ये सत्यपि सोमालाभे पूतीकानां पूतीकशब्देन विधानात् पूतीकबुद्ध्यैव उपादानात् फलचमसवन्न सामानविध्यमिति प्राप्ते, सिद्धान्तयति—

## नियमार्था पुनःश्रुतिः ॥ ३६ ॥

सोमालाभे तत्सदृशद्रव्येष्वन्येष्वपि प्राप्तेषु पूतीकानां कदाचित्प्राप्तत्वात् अप्राप्तदंशपूरणाय नियमविधानार्थं पुनर्वचनम् ; अर्थात्तु तदितरसदृशद्रव्याणां ग्रहणं निवर्तत इति न परिसंख्यानिबन्धनं त्रैदोष्यम् ; न त्विह पूतीका अपूर्वतया विधेयाः, अत्यन्ताप्राप्ततद्विधौ गौरवात्, कदाचित्प्राप्तत्वेनात्यन्ताप्राप्त्यभावाच्च ; पूतीकग्रहणं तु पूतीकगतसोमावयवोपलक्षणम् ; तस्मात् पूतीकानां सोमसामानविध्यम् । प्रयोजनं पूर्वपक्षे प्रकृतौ 'सोमं ते क्रीणामि' इत्यादिमन्त्राणां पूतीकशब्दविकारेण प्रवृत्तिः, सिद्धान्ते तु अविकारेण प्रवृत्तिरिति ॥ वृत्तमधिकरणम् ॥

ज्योतिष्टोमे अग्निष्टोमाख्यस्तोत्रयुक्तं सोमयज्ञ्यभ्यामप्रचारान्तं कर्मकलापमनुक्रम्य 'इत्यग्निष्टोमः' इत्युक्त्वा 'पशुकाम उक्थ्यं गृह्णीयात्' 'षोडशिना वीर्यकामस्य स्तुवीत'

१६. दक्षिणीयादिधर्माणामग्निष्टोमाङ्गताधिकरणम् ।

'अतिरात्रेण प्रजाकामं याजयेत्' इति काम्यगुणाननुक्रम्य, अनूयाजाद्युदवसानीयान्तं यज्ञपुच्छमाम्नातम् । तत्र 'सोमेन यजेत' इत्युत्पन्नस्य सोमयागस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति फलविधिः 'अग्निष्टोमेन यजेत' इति तु तस्य संस्थाविधिः ; अग्निष्टोमशब्दो हि आग्निमारुतशस्त्रात् पूर्वभाविस्तोत्रविशेषे वर्तते, 'अग्निष्टोमेन स्तुवते' इति स्तौतिसामानाधिकरण्यात् ; तथा अग्निष्टोमसंस्थाकक्रतावपि वर्तते, 'अग्निष्टोमः प्रथमयज्ञः' इति दर्शनात् । तत्र आकृत्यधिकरणन्यायेन विशेषणभूताग्निष्टोमसंस्थैवाभिधेया ; क्रतुस्तु गवादिशब्देषु व्यक्तिरिव निरूढलक्षणया शक्तितुल्यया गम्यते ; अग्निष्टोमसंस्था च इह अग्निष्टोमाख्यस्तोत्रादूर्ध्वं स्तोत्रव्यापारोपरतिर्विवक्षिता ; ततश्च अग्निष्टोमस्तोत्रादूर्ध्वम् आग्निमारुतशस्त-

द्वीयद्व्यभ्यासप्रचारानूयाजादियज्ञपुच्छमस्त्वेऽपि न क्षतिः। न चाग्निष्टोमशब्दस्य स्तोत्रविशेषवाचिन एव लक्षणया अग्निष्टोमस्तोत्रसंबन्धेन क्रतावपि प्रयोगोऽस्त्विति वाच्यम्; तथा सति योऽयमुक्थ्यादिसंस्थाकैः क्रतुभिर्यजते तस्मिन्नपि 'अग्निष्टोमेन यजते' इति प्रयोगापत्तेः, तेष्वप्यग्निष्टोमस्तोत्रसंबन्धसत्त्वात्। तदेवं स्तोत्रविशेषवाची, तत्संस्थावाची चाग्निष्टोमशब्दः; तत्र 'अग्निष्टोमेन यजेत' इत्यत्र यजिसामानाधिकरण्यात् संस्थानिमित्तकक्रतुपर एवास्थेयः। तथा चाग्निष्टोमसंस्थाकेन क्रतुना भावयेदिति प्रतीयमानोऽर्थः; तत्र क्रतुस्तावत् 'सोमेन यजेत' इत्युत्पत्तिवाक्यादेव प्राप्तः प्राप्ताप्राप्तविवेकेन लोहितोष्णीषादिवद्विशेषणभूताग्निष्टोमसंस्थैव विधीयते—अग्निष्टोमसंस्थया क्रतुमुपकुर्यादिति। उक्थ्यषोडशिशब्दावपि स्तोत्रविशेषवाचकौ 'उक्थ्यैः स्तुवते' 'षोडशिना स्तुवते' इति स्तौतिसामानाधिकरण्यात्, 'उक्थ्यो यज्ञः' 'षोडशी यज्ञः' इति प्रयोगात् तत्संस्थाकक्रत्वोरपि वर्तमानौ आकृत्यधिकरणन्यायेन विशेषणभूततत्संस्थयोर्वाचकौ; उक्थ्यसंस्थया पशून् कुर्यात्, षोडशिसंस्थया वीर्यं कुर्यात्, इत्यर्थः, उक्थ्यमिति द्वितीया तु अग्निहोत्रमितिवदुपपाद्या; गृह्णातिस्तु 'सौर्यं चरुं निर्वपेत्' इत्यादौ निर्वपत्यादिवत् प्रत्ययमात्रानुग्रहाय फलवत्संस्थाङ्गत्वेन वाक्यान्तरप्राप्तग्रहणस्यानुवादकः, 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्' इति हि ग्रहणस्य स्तोत्रसंबन्धोऽवगम्यते; ग्रहणबलात्तद्द्व्यभ्यासोऽपि गम्यते; ततश्च ग्रहणं स्तोत्रं तद्द्व्यभ्यासश्चेत्येतत्सर्वमुक्थ्यसंस्थायाः फलवत्त्वात् फलवदफलन्यायेन तदर्थं भवति। एवं षोडशिवाक्येऽपि योज्यम्। न चोक्थ्यषोडशिशब्दाविह स्तोत्रपरावेव किं न स्यातामिति वाच्यम्, 'उक्थ्यो यज्ञः' 'न वै षोडशी नाम यज्ञोऽस्ति' इत्यादिवाक्यशेषावगतयजिसामानाधिकरण्यबलेन संस्थानिमित्तकत्वस्यैवावधारणात्। एवं च उक्थ्यषोडशिवाक्यद्वयमेतत् 'उक्थ्येन पशुकामो यजेत' 'षोडशिना वीर्यकामः' इति वाक्यद्वयं च समानार्थं संपद्यते। अतिरात्रशब्दोऽपि रात्रिमतीत्य संतिष्ठते इति व्युत्पत्त्या संस्थानिमित्तक एव। रात्रिमतीत्य यो वर्तते इति व्युत्पत्त्याश्रयणे तु अग्निष्टोमादिसंस्थेष्वपि क्रतुषु तत्प्रयोगापत्तिः, तेष्वपि सुत्याप्रयोगस्य पूर्वेद्युर्महारात्रे उपक्रम्य उत्तरेऽहनि समाप्यत्वात्। संस्थानिमित्तकक्रतुपरत्वेऽपि प्राप्ताप्राप्तविवेकेन संस्थैवात्रापि फलाय विधीयते—अतिरात्रसंस्थया प्रजां कुर्यादिति। तदेवं ज्योतिष्टोमः क्रतुः फलार्थः; अग्निष्टोमसंस्था क्रत्वङ्गम्। उक्थ्यादिसंस्थास्तु फलान्तरार्थतया ज्योतिष्टोममाश्रित्य विधीयन्ते। तथा च चतुःसंस्थो ज्योतिष्टोमोऽवधारितः। सर्वास्वपि संस्थासु 'त्रिवृत्पञ्चदशः सप्तदश एकविंशः, एतानि वाव तानि ज्योतींषि, य एतस्य स्तोमाः' इति निरुक्तज्योतिष्टोमत्वमनुस्यूतं भवति। तदेतत् संस्थाभेदोपजननेऽपि नापैति — यथा देवदत्तस्य जन्माद्यवस्थाभेदेऽपि देवदत्तत्वं नापैति, तद्वत्। संस्थानां तु विरोधादन्योन्यं समावेशो नास्तीति स्थितिः। तदिह संशयः— किं दीक्षणीयाद्यङ्गविधानमग्निष्टोमसंस्थज्योतिष्टोमस्य का-

न्यसंस्थानां च साधारणम्, उताग्निष्टोमसंस्थज्योतिष्टोमस्यैवेति । तत्र पूर्वपक्षयति—

## संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ ३७ ॥

तु: फलचमसवैषम्ये । मा भूत्फलचमसस्य नैमित्तिकस्य सोमद्रव्यसमानविधानता; उक्थ्यादिसंस्थास्तु काम्या: ज्योतिष्टोमसमानविधाना भवितुमर्हन्ति । कुत ? प्रकरणाविशेषात्— प्रकरणम् इतिकर्तव्यताकाङ्क्षालक्षणम् । तदेतत् ज्योतिष्टोमस्य क्रतो: तदाश्रितानां च काम्यसंस्थानां फलार्थत्वाविशेषादविशिष्टम् । न ह्यत्र— नियमभिषवादिधर्मै: क्रतुमुपकुर्यादनित्यफलचमसद्वारेतिवत् नित्यानित्यसंयोगविरोधोऽस्ति; एतदेव हि फलचमसस्य असमानविधानता— यदेतदभिषवादिधर्माणां क्रत्वन्वये फलचमसस्य न द्वारत्वमिति; न हि तस्य स्वतो धर्मग्राहित्वमस्ति, अफलत्वात्; नित्यानित्यसंयोगविरोधश्च द्वारमवलम्ब्य धर्मान्वये, न तु स्वतो धर्मान्वयेऽपि; न च संस्थानामिह काम्यानां द्वारतयान्वय:, तासां क्रतुवदेव फलार्थतया स्वतो धर्मग्राहित्वात्; अन्यथा ज्योतिष्टोमस्यापि नित्यस्यैव धर्मविधानं स्यात्, न तु फलार्थस्य, फलकामनाया अनित्यत्वात् । ततश्च— नित्यं दीक्षणीयादिधर्मै: क्रतोरुपकुर्यात्, पश्चाद्विफलकामनायामुक्थ्यादिसंस्थाभि: उपकुर्यादित्यन्वये विरोधाभावात् तासां समानविधानता ।

इतोऽप्येवमित्याह—

## व्यपदेशश्च तुल्यवत् ॥ ३८ ॥

...त्यार्थे वति: 'ओमिस्त्रवदत्रा भात्' 'तृज्वत्क्रोष्टु:' इति व्याकरणसूत्रव्याख्यावसरे आभीयं कार्यमसिद्धं भवति, क्रोष्टुशब्द उकारान्त: तृजन्त: क्रोष्टृशब्दो भवति इति तद्भाष्यवार्तिकयोर्व्यवहृतत्वेन स्वार्थवते: ज्ञापितत्वात्; अत एव च 'नित्यवदाम्नातम्' 'सिद्धवत्क्रमम्' इत्यादि संगच्छते । व्यपदेश: ज्योतिष्टोमप्रकरणे विशिष्य धर्मोपदेश: सर्वसंस्थानां तुल्यो दृश्यते— 'यमग्ने पृत्सु मर्त्यमिति प्रचरणीशेषात्क्रतुकरणं जुहोति, यद्यग्निष्टोम:' 'अथ यद्युक्थ्यो मध्यमं परिधिमनक्ति' 'यदि षोडशी द्रोणकलशमुपस्पृशति' इति 'यद्यतिरात्र एतदेव यजुर्वदन् हविर्धानं प्रपद्यते' इति । इदं च तत्तत्संस्थानां धर्मविशेषवचनं सामान्यधर्मविधीनामविशेषितानां सर्वसंस्थासाधारण्यं गमयति । किं च यदि सामान्यविहितमग्निष्टोमसंस्थस्यैव क्रतो: स्यात्, तदा 'यद्यग्निष्टोम:' इत्यनर्थकमेव स्यात्, तद्विनापि 'यमग्ने पृत्सु मर्त्यमिति जुहोति' इत्येतावतैवाग्निष्टोमक्रत्वङ्गत्वसिद्धे: । किं च उक्थ्यादिसंस्थानां ज्योतिष्टोमप्रकरणपरिग्रहाभावे 'यद्युक्थ्य:' इत्यादियदुपबन्धोऽनुपपन्न:, तस्यानेकसंनिहितापेक्षत्वात्, ततश्च 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इतिवत् यदनुबन्धं विनैव धर्मविधानं स्यात् । अत उक्थ्यादिसंस्थासाधारण-